दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुप संगृह्णीयात् ॥ २१ ॥

उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके ॥ २२ ॥

सर्वाह्णं सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥ २३ ॥

तथा गुरुकर्मसु ॥ २४ ॥

मनसा चानध्याये ॥ २५ ॥

आहूताध्यायी च स्यात् ॥ २६ ॥ ५ ॥

## १. २. ६.

सदा निशायां गुरुं संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्य ॥ १ ॥

अनुज्ञातः संविशेत् ॥ २ ॥

न चैनमभिप्रसारयीत ॥ ३ ॥

न खट्वायाँ सतोऽभिप्रसारणमस्तीत्येके ॥ ४ ॥

न चास्य सकाशे संविष्टो भाषेत ॥ ५ ॥

अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ ६ ॥

अनूत्थाय तिष्ठन्तम् ॥ ७ ॥

गच्छन्तमनुगच्छेत् ॥ ८ ॥

धावन्तमनुधावेत् ॥ ९ ॥

न सोपानद्वेष्टितशिरा अवहितपाणिर्वासीदेत् ॥ १० ॥

अध्वापन्नस्तु कर्मयुक्तो वासीदेत् ॥ ११ ॥

---

I 2, 5, 23 सयुक्तो N U, अध्यायेत् G, M U, G U[2] Haradatta d clares (see the Com ) this to be the usual r ading. It owes its origin to a faulty doubling of the initial त of the next Sutra.

I. 2, 5, 24 गुरुकर्मसु च G U[3]

I. 2, 6, 1 G U[3] join Sutras 1 2.

I. 2, 6, 2 मनिवेशयेत् Md.

I 2, 6, 7 अनूत्थाय G, N, M U text. M U Com अनुत्थाय

I 2 6, 8 G U[2,3] join this S with the next, but G U[1,3] say in the Com. on S 7 उत्तरे द्व सूत्रे स्पष्टार्थे

I. 2, 6, 10 °शिरावहित° M. U text.

न चेदुपसीदेत् ॥ १२ ॥

देवमिवाचार्यमुपासीताविकथयन्नविमना वाचं शुश्रूषमाणोस्य ॥ १३ ॥

अनुपस्थकृतः ॥ १४ ॥

अनुवाति वीतः ॥ १५ ॥

अप्रतिष्टब्धः पाणिना ॥ १६ ॥

अनपश्रितोन्यत्र ॥ १७ ॥

यज्ञोपवीती द्विवस्त्रः ॥ १८ ॥

अधोनिवीतस्त्वेकवस्त्रः ॥ १९ ॥

अभिमुखोनभिमुखम् ॥ २० ॥

अनासन्नोनतिदूरे ॥ २१ ॥

यावदासीनो बाहुभ्यां प्राप्नुयात् ॥ २२ ॥

अप्रतिवातम् ॥ २३ ॥

एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत् ॥ २४ ॥

यथावकाशं बहवः ॥ २५ ॥

तिष्ठति च नासीतानासनयोगविहिते ॥ २६ ॥

आसीने च न संविशेत् ॥ २७ ॥

चेष्टति च चिकीर्षंस्तच्छक्तिविषये ॥ २८ ॥

न चास्य सकाशेन्वक्स्थानिनमुपसंगृह्णीयात् ॥ २९ ॥

गोत्रेण वा कीर्तयेत् ॥ ३० ॥

न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेद्वा ॥ ३१ ॥

अपि चेत्तस्य गुरुः स्यात् ॥ ३२ ॥

देशात्त्वासनाच्च सँसर्पेत् ॥ ३३ ॥

---

I. 2, 6, 15 वाते add P U, Mr. U. I, II, M. U. N, P

I. 2, 6, 21 च add P. s c. m, G U²

I. 2, 6, 28 Haradatta conjectures चिकीर्षेत्, see the Com.

I. 2, 6, 29 °स्थानिन ०व° Md., N U

I. 2, 6, 31 N U, G U² join S 31-32.

नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके ॥ ३४ ॥

यस्मिंस्त्वनाचार्यसंबन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेप्याचार्यस्य ॥ ३५ ॥

भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत् ॥ ३६ ॥

आचमेद्वा ॥ ३७ ॥

किं करवाणीत्यामन्त्र्य ॥ ३८ ॥ ६ ॥

१. २. ७.

उत्तिष्ठेत्तूष्णीं वा ॥ १ ॥

नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात् ॥ २ ॥

न प्रेक्षेत नग्नां स्त्रियम् ॥ ३ ॥

ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत् ॥ ४ ॥

उपानहौ छत्रं यानमिति च वर्जयेत् ॥ ५ ॥

न स्मयेत ॥ ६ ॥

यदि स्मयेतापिगृह्य स्मयेतेति हि ब्राह्मणम् ॥ ७ ॥

नोपजिघ्रेत्स्त्रियं मुखेन ॥ ८ ॥

न हृदयेन प्रार्थयेत् ॥ ९ ॥

नाकारणादुपस्पृशेत् ॥ १० ॥

रजस्वलो रक्तदन्तस्सत्यवादी स्यादिति हि ब्राह्मणम् ॥ ११ ॥

यां विद्यां कुरुते गुरौ तेप्यस्याचार्या ये तस्यां गुरोर्वंश्याः ॥ १२ ॥

यानन्यान्पश्यतोस्योपसंगृह्णीयात्तदा त्वेत उपसंग्राह्याः ॥ १३ ॥

गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना भिक्षा ॥ १४ ॥

समावृत्तो मात्रे दद्यात् ॥ १५ ॥

---

I 2, 6, 36 भुक्त्वा चास्य om G¹, आचार्यस° G U³

I 2, 7, 2 नोपपर्यावर्तेत G¹, G U³ text

I 2, 7, 5 च om M U, P. U, N U Mr U I, II, P

I 2 7,7 हि om all except Md and G¹, Mr U I, II

I 2, 7, 11 हि om. all except Md. G¹, M. U, G U³

I 2, 7, 13 तदा om Md., G¹; अस्य om G¹,

माता भर्तारं गमयेत् ॥ १६ ॥

भर्ता गुरुम् ॥ १७ ॥

धर्मकृत्येषु वोपयोजयेत् ॥ १८ ॥

कृत्वा विद्यां यावतीं शक्नुयाद्वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥ १९ ॥

विषमगते त्वाचार्य उग्रतः शूद्रतो वाहरेत् ॥ २० ॥

सर्वदा शूद्रत उग्रतो वाचार्यार्थस्याहरणं धार्म्यमित्येके ॥ २१ ॥

दत्त्वा च नानुकथयेत् ॥ २२ ॥

कृत्वा च नानुस्मरेत् ॥ २३ ॥

आत्मप्रशंसां परगर्हामिति च वर्जयेत् ॥ २४ ॥

प्रेषितस्तदेव प्रतिपद्येत ॥ २५ ॥

शास्तुश्चानागमाद्वृत्तिरन्यत्र ॥ २६ ॥

अन्यत्रोपसंग्रहणादुच्छिष्टाशनाच्चाचार्यवदाचार्यदारे वृत्तिः २७ ॥

तथा समादिष्टेऽध्यापयति ॥ २८ ॥

वृद्धतरे च सब्रह्मचारिणि ॥ २९ ॥

उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥ ३० ॥

समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु ॥ ३१ ॥ ७ ॥

१. २. ८.

यथा ब्रह्मचारिणो वृत्तम् ॥ १ ॥

माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टित्युपवेष्टिती काञ्चुक्युपानही पादुकी ॥ २ ॥

---

I. 2,7,31. सर्वथा N. U., Md., धार्मम् Md., धर्म्यम् G¹. Haradatta knew the latter reading, see the Com.

I. 2, 7, 25. तदेव N. U., Md.

I. 2, 7, 26 अन्यत्र om. P., N., N. U., G¹.

I. 2, 7, 28. समादिष्टे G¹, G. U³, M. U.

I. 2, 8, 2. पादुकी om. N. U. and adds in the Com. पादुकीति पाठे, which latter words no other copy of the U. has. Haradatta seems to know a reading कञ्चुकोपानही, but calls that, given above, the प्रसिद्धः पाठः, see the Com.

उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा ॥ ३ ॥

स्वैरिकर्मसु च ॥ ४ ॥

यथा दन्तप्रक्षालनोत्सादनावलेखनानीति ॥ ५ ॥

तद्द्रव्याणां च न कथयेदात्मसंयोगेनाचार्यः ॥ ६ ॥

स्नातस्तु काले यथाविध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसँहरेदित्येके ॥ ७ ॥

उच्चैस्तरां नासीत ॥ ८ ॥

तथा बहुपादे ॥ ९ ॥

सर्वतः प्रतिष्ठिते ॥ १० ॥

शय्यासने चाचरिते नाविशेत् ॥ ११ ॥

यानमुक्तोऽध्वन्यन्वारोहेत् ॥ १२ ॥

सभानिकपकटस्वस्तराँश्च ॥ १३ ॥

नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥ १४ ॥

व्युपतोदव्युपजावव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् ॥ १५ ॥

आपद्यर्थं ज्ञापयेत् ॥१६ ॥

सह वसन्सायं प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत् ॥ १७ ॥

विप्रोष्य च तदहरेव पश्येत् ॥ १८ ॥

आचार्यप्राचार्यसंनिपाते प्राचार्यायोपसंगृह्योपसंजिघृक्षेदाचार्यम् ॥ १९ ॥

प्रतिषेधेदितरः ॥ २० ॥

लुप्यते पूजा चास्य सकाशे ॥ २१ ॥

---

I. 2, 8, 5 °छेखादीनिति G. U², °दिति G. U³.

I. 2, 8, 15. °व्युपजाप° P., P. U., N., N U., G U¹,²,³, but see the Com.

I. 2, 8, 19. प्राचार्योपसंगृह्य N. U., G. U³, but see the Com.

मुहुश्चाचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षालनानीति ॥ २२ ॥

तस्मिन्गुरोर्वृत्तिः ॥ २३ ॥

पुत्रमिवैनमनुकाङ्क्षन्सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् ॥ २४ ॥

न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु ॥ २५ ॥

अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः ॥ २६ ॥

आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥ २७ ॥

अपराधेषु चैनं सततमुपालभेत ॥ २८ ॥

अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमा निवृत्तेः ॥ २९ ॥

निवृत्तं चरितब्रह्मचर्यमन्येभ्यो धर्मेभ्योऽनन्तरो भवेत्यतिसृजेत् ॥ ३० ॥
॥ ८ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने द्वितीयः पटलः समाप्तः ॥

१. ३. ९.

श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत ॥ १ ॥

तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् ॥ २ ॥

अर्धपञ्चमांश्चतुरो मासानित्येके ॥ ३ ॥

निगमेष्वध्ययनं वर्जयेत् ॥ ४ ॥

आनडुहेन वा शकृत्पिण्डेनोपलिप्तेऽधीयीत ॥ ५ ॥

---

1. 2, 8, 22 मुहुश्चा° N; मुहुश्चा° G. U³, अधिहस्त्यम् G. U¹,³, अधिह° G¹ etc. m, अपि वा G U³ The Devanāgari copies of the U. and Md. insert after this S, मातरं पितरमाचार्यमग्नींश्च गृहाणि च रिक्तपाणिर्नोपगच्छेद्राजानं चेन्न श्रुतमिति with the remark इत्यम्; but the end of the Com on S 22 shows that the words are an interpolation.

I 2, 8, 24 अनुपच्छादयमानः Md, अनव° G U³. Com

I. 3, 9, 5. °लिप्याधीयीत G U² text, °प्तेऽधीयीत G. U³.

श्मशाने सर्वतः शम्याप्रासात् ॥ ६ ॥

ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः ॥ ७ ॥

ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत ॥ ८ ॥

श्मशानवच्छूद्रपतितौ ॥ ९ ॥

समानागार इत्येके ॥ १० ॥

शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः ॥ ११ ॥

तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥ १२ ॥

ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन्संभाषितुं ब्राह्मणेन संभाष्य तया संभाषेत। संभाष्य तु ब्राह्मणेनैव संभाष्याधीयीत। एवं तस्याः प्रजानिःश्रेयसम् ॥ १३ ॥

अन्तःशवम् ॥ १४ ॥

अन्तश्चाण्डालम् ॥ १५ ॥

अभिनिर्हृतानां तु सीम्न्यनध्यायः ॥ १६ ॥

संदर्शने चारण्ये ॥ १७ ॥

तदहरागतेषु च ग्रामं बाह्येषु १८ ॥

अपि सत्सु ॥ १९ ॥

संधावनुस्तनिते रात्रिम् ॥ २० ॥

स्वप्नपर्यान्तं विद्युति ॥ २१ ॥

उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायः ॥ २२ ॥

दह्रेपररात्रे स्तनयित्नुना ॥ २३ ॥

---

I 2 9, 7 ग्रामण वा G U[2] text.

I 2 9, 14 15 M U joins these two Sutras

I. 2, 9, 16 अभिनिर्हृताना G[1] G U[1], text and Com

I 2 9 21 स्वप्नपर्यन्त Md, N G U[2], which latter has also विद्युति [illegible] the Com

I. 2 9 23 दहर N U, दह्रे P sec. m, [illegible] G[1] pr m[illegible]

ऊर्ध्वमर्धरात्रादित्येके ॥२४॥

गवां चावरोधे ॥ २५ ॥

वध्यानां च यावता हन्यन्ते ॥ २६ ॥

पृष्ठारूढः पशूनां नाधीयीत ॥ २७ ॥

अहोरात्रावमावास्यासु ॥ २८ ॥९ ॥

१. ३, १०.

चातुर्मासीषु च ॥ १ ॥

वैरमणो गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः ॥ २ ॥

तथा संबन्धेषु ज्ञातिषु ॥ ३ ॥

मातरि पितर्याचार्य इति द्वादशाहाः ॥ ४ ॥

तेषु चोदकोपस्पर्शनं तावन्तं कालम् ॥ ५ ॥

अनुभाविनां च परिवापनम् ॥ ६ ॥

न समावृत्ता वपेरन्नन्यत्र विहारादित्येके ॥ ७ ॥

अथापि ब्राह्मणम् । रिक्तो वा एषोनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥ ८ ॥

सत्रेषु तु वचनाद्वपनं शिखायाः ॥९ ॥

आचार्ये त्रीनहोरात्रानित्येके ॥ १० ॥

श्रोत्रियसंस्थायामपरिसंवत्सरायामेकाम् ॥ ११ ॥

सब्रह्मचारिणीत्येके ॥ १२ ॥

श्रोत्रियाभ्यागमेधिजिगांसमानोधीयानो वानुज्ञाप्याधीयीत ॥ १३॥

अध्यापयेद्वा ॥ १४ ॥

---

I 2, 9, 26. यावता वा Md., G U[3] text.

I 3, 10, 2 वैरमणे P pr. m, औपरण इति द्वादशाहा G[1], त्रियहा G U[1], see the Com.

I 3, 10, 6 परीवापनम् G U[1], G[1].

I. 3, 10, 8. ह वा ए' Md

I 3 10, 9 G, U[1], joins Sutras 8 9 but has also a separate Com on S 9 P., P U join S 9 10

I 3, 10, 11, एकाहम् G U[1] text,

I. 3, 10, 13 N U joins Sutras 13 14 and 15-16

गुरुसंनिधौ चाधीहि भो इत्युक्त्वाधीयीत ॥ १५ ॥

अध्यापयेद्वा ॥ १६ ॥

उभयत उपसंग्रहणमधिजिगाँसमानस्याधीत्य च ॥ १७॥

अधीयानेषु वा यत्रान्यो व्यवेयादेतमेव शब्दमुत्सृज्याधीयीत॥१८॥

श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दाः सर्वे वादित्रशब्दाः रोदनगीतसामशब्दाश्च ॥ १९ ॥

शाखान्तरे च साम्नामनध्यायः ॥ २० ॥

सर्वेषु च शब्दकर्मसु यत्र सँसृज्येरन् ॥ २१ ॥

छर्दयित्वा स्वमान्तम् ॥ २२ ॥

सर्पिर्वा प्राश्य ॥ २३ ॥

पूतीगन्धः ॥ २४ ॥

शुक्तं चात्मसंयुक्तम् ॥ २५ ॥

प्रदोषे च भुक्त्वा ॥ २६ ॥

प्रोदकयोश्च पाण्योः ॥ २७ ॥

प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ॥ २८ ॥

आ च विपाकात् ॥ २९ ॥

अश्राद्धेन तु पर्यवदध्यात् ॥ ३० ॥ १० ॥

१. ३. ११.

काण्डोपाकरणे चामातृकस्य ॥ १ ॥

काण्डसमापने चापितृकस्य ॥ २ ॥

मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके ॥ ३ ॥

---

I 3, 10, 19. सालावृक्ये॰ G[1], but see the Com

I. 3 10, 21 च om. G U [1,3],

I 3 10, 24. पूतिगन्ध ॥ Dev Mss. (except P sec. m) and G U[1,3].

I 3, 11, 3 देवानां च Md.

पर्युषितैस्तण्डुलैराममांसेन च नानध्यायाः ॥ ४ ॥

तथौषधिवनस्पतिमूलफलैः ॥ ५ ॥

यत्काण्डमुपाकुर्वीत यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ॥ ६ ॥

उपाकरणसमापनयोश्च पारायणस्य तां विद्याम् ॥ ७ ॥

वायुर्घोषवान्भूमौ वा तृणसंवाही वर्षति वा यत्र धाराः प्रवहेत् ॥ ८ ॥

ग्रामारण्ययोश्च सन्धौ ॥ ९ ॥

महापथे च ॥ १० ॥

विप्रोष्य च समध्ययनं तदहः ॥ ११ ॥

स्वैरिकर्मसु च ॥ १२॥

यथा पादप्रक्षालनोत्सादनानुलेपनानीति ॥ १३ ॥

तावन्तं कालं नाधीयीताध्यापयेद्वा ॥ १४ ॥

सन्ध्योः ॥१५॥

तथा वृक्षमारूढः ॥ १६ ॥

अप्सु चावगाढः ॥ १७ ॥

नक्तं चापावृते ॥ १८ ॥

दिवा चापिहिते ॥ १९ ॥

अविहितमनुवाकाध्ययनमाषाढवासन्तिकयोः ॥ २० ॥

नित्यप्रश्नस्य चाविधिना ॥ २१ ॥

तस्य विधिः ॥ २२ ॥

---

1, 3, 11, 12. स्वैरक° Mr. U. I, H.

I, 3, 11, 13 °सादनावक्षेपनानीति G. U[1] °नोत्सर्जनानुक्षेपणानीति G, U[1], °नोत्सं-घनानुलेपनानीतिG.U[2].अवक्षेपनानि Md., अनुक्षेपनानि P. sec. m., H. U, N., G[1] Mr. U. I, H.

1 3, 11, 17. चावगाढः Md

अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशेऽधीयीत यथाध्याय-मुत्सृजन्वाचा ॥ २३ ॥

मनसा चानध्याये ॥ २४ ॥

विद्युति चाभ्यग्रायाँ स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते ॥ २५ ॥

श्राद्धभोजन एवैके ॥ २६ ॥

विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायः ॥ २७ ॥

यावद्भूमिर्व्युदकेत्येके ॥ २८ ॥

एकेन द्वाभ्यां वैतेषामाकालम् ॥ २९ ॥

सूर्याचन्द्रमसोर्ग्रहणे भूमिचलेपस्वान उल्कायामग्न्युत्पाते च सर्वासां विद्यानाँ सार्वकालिकमाकालम् ॥ ३० ॥

अभ्रं चापर्तौ सूर्याचन्द्रमसोः परिवेष इन्द्रधनुः प्रतिसूर्यमत्स्यश्च वाते पूतीगन्धे नीहारे च सर्वेष्वेतेषु तावन्तं कालम् ॥ ३१ ॥

मुहूर्तं विरते वाते ॥ ३२ ॥

सलावृक्यामेकसृक इति स्वप्नपर्यान्तम् ॥ ३३ ॥

नक्तं चारण्येनग्नावहिरण्ये वा ॥ ३४ ॥

अननूक्तं चापर्तौ छन्दसो नाधीयीत ॥ ३५ ॥

प्रदोषे च ॥ ३६ ॥

---

I 3, 11, 30 भूमिचले N, P U, N U, M U, Mr U I II, °मिच्छाचले P

I, 3, 11,31 पूतिगन्धे N, P, P. U, N. U M. U, Mr U I II, G U¹,-च om Md

I 3, 11, 33 सालावृ° G¹, G U¹,², एक-सृकोलूक इति Md, °पर्यन्तम् D.. Ms and Md

I 3, 11, 35. नानूक्तम् Md.

सार्वकालिकमाम्नानम् ॥ ३७ ॥
यथोक्तमन्यदतः परिपत्सु ॥ ३८ ॥ ११ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने तृतीयः पटलः समाप्तः ॥

१. ४. १२.

तपः स्वाध्याय इति ब्राह्मणम् ॥ १ ॥
तत्र श्रूयते । स यदि तिष्ठन्नासीनः शयानो वा स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति ॥ २ ॥
अथापि वाजसनेयिब्राह्मणम् । ब्रह्मयज्ञो ह वा एष यत्स्वाध्याय-

---

I 3, 11, 37 After this Sutra N U and Md. add -

यदि सर्पो व्यवेयात् ।
एनद्व कुम्भीनस. ।
इत्येषा दीर्घजातीना नृपिकमण्डूकमार्जाराणां [मार्जाराना Md ] वायसस्याहोरात्र. ।
सप्तद्वीपमेव[मद्देपमेव N U]चाण्डालश्वपाक.।
वानरस्याजरस्य च पण्नामान् ।
यदि हस्ती सवत्सर.।[हस्तिन सवत्सर Md ]
व्याघ्रश्च तथैव। [व्याघ्रस्य च Md. ]
यथोत्कृते मन्त्राणामेवमुत्सृष्टे कल्पानाम्।

N U gives no Com on these Sutras and the analogy of other passages makes it extremely probable that they are interpolations, caused by the vagueness of Sutra 37 It must however be mentioned, that another old Puna Ms , which was consulted for this passage, exhibits them likewise B s les, the last Sutra is found, with slight variations, also in the Hir S. the Commentary of which does, however, not notice it. Finally Nandapandita says in his Commentary on Vishnu 32, 22 :- यदि हस्ती सवत्सरो यदि व्याघ्रस्तथैव चेकाप-स्तम्ब । It would seem, that he also knew S 6 and 7 For the difference between the text of N. U and his quotation may be placed to the score of the habitual inaccuracy of the Hindu Pandits in quoting Nandapandita is a modern writer and very careless, so that it would be unwise to place these Sutras into our text on his authority, especially as the Granth Mss. have no trace of them. But his testimony, as well as the other points mentioned, show that this interpolation is not of recent date

I. 4, 12, 1. इति हि स्वा° G[1], G U[2].
I. 4, 12, 2. तदैतिरेषा° P, P. U.

स्तस्यैते वषट्कारा यत्स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति । तस्मात्स्तनयति विद्योतमानेवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामच्छम्बट्कारायेति ॥ ३ ॥

तस्य शाखान्तरे वाक्यसमाप्तिः ॥ ४ ॥

अथ यदि वातो वा वायात्स्तनयेद्वा विद्योतेत वावस्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा सामाभिव्याहरेद्भूर्भुवः सुवः सत्यं तपः श्रद्धायां जुहोमीति वैतत् । तेनो हैवास्यैतदहः स्वाध्याय उपात्तो भवति ॥ ५ ॥

एवं सत्यार्यसमयेनाविप्रतिपिद्धम् ॥ ६ ॥

अध्यायानध्यायं ह्युपदिशन्ति । तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदपेक्षेत ॥ ७ ॥

आर्यसमयो ह्यगृह्यमानकारणः ॥ ८ ॥

विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ॥ ९ ॥

ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते ॥ १० ॥

यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ॥ ११ ॥

तदनुवर्तमानो नरकाय राध्यति ॥ १२ ॥

अथ ब्राह्मणोक्ता विधयः ॥ १३ ॥

तेषां महायज्ञा महासत्त्राणीति संस्तुतिः ॥ १४ ॥

अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्ति दानम् ॥ १५ ॥ १२ ॥

---

1, 4, 12 3 यद्वातो वाति Md, Mr U I text G U[1] text, स्फूर्जति वाते वायति P, P U, N U, Mr U I II, स्फूर्जति वा वाते वा वायति Md, वाजसनेयी° G U[1], P. U, Mr U I, II, चेत् om N U, P U, Mr U I II

I 4, 12, 7 °नध्याये Md, तदुपदेशनमनर्थं°

I 4 12, 8 अगृह्यमाण° G[1], M U., but see the Com

I 4 12, 10 N U, M U Mr U I II, make प्रयोगादनुमीयन्त a separate Sutra.

## १. ४. १३.

देवेभ्यः स्वाहाकार आ काष्ठात्पितृभ्यः स्वधाकार ओदपात्रात्स्वाध्याय इति ॥ १ ॥

पूजा वर्णज्यायसां कार्या ॥ २ ॥

वृद्धतराणां च ॥ ३ ॥

हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्न- [illegible]

न समावृत्त समादेशो विद्यत ॥ ५ ॥

ओंकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत ॥ ६ ॥

विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म ॥ ७ ॥

यज्ञेषु चैतदादयः प्रसवाः ॥ ८ ॥

लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्त्यृद्धिमिति ॥ ९ ॥

नासमयेन कृच्छ्रं कुर्वीत त्रिःश्रावणं त्रिःसहवचनमिति परिहाप्य ॥ १० ॥

अविचिकित्सा यावद्ब्रह्म निगन्तव्यमिति हारीतः ॥ ११ ॥

न बहिर्वेदे गतिर्विद्यते ॥ १२ ॥

समादिष्टमध्यापयन्तं यावदध्ययनमनुपसंगृह्णीयात् ॥ १३ ॥

नित्यमर्हन्तमित्येके ॥ १४ ॥

न [illegible] ॥ १५ ॥

---

I. 4. 13, 1 देवेभ्य—त्विति च G. U.[1], [illegible] G[1], [illegible] N, P, P. U, N. U, M. U, Mr. U. I, H, G. U[1] divide the Sûtra into [illegible]

I. [illegible] Sûtra after this हारीतपक्षे, but this is a corrupt piece of the Com.

I. 4, 13, 7. N. U. P. join this Sûtra with the next, G. U[1], joins Sûtras 7–9 as far as वाक्यानि स्युः

I. 4, 13, 10. P. U. Mr. U. I. U. M. U. [illegible]

I. 4, 13, 15, Md. om. this Sûtra.

वृद्धानां तु ॥ १६ ॥

ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते ॥ १७ ॥

ब्रह्म वर्धत इत्युपदिशन्ति ॥ १८ ॥

निवेशे वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतमिच्छन्निति श्वेतकेतुः ॥ १९ ॥

एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालाच्छ्रुतमकुर्वीति ॥ २० ॥

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ २१ ॥

निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते ॥ २२ ॥ १३ ॥

१. ४. १४.

अग्निहोत्रमतिथयः ॥ १ ॥

यच्चान्यदेवंयुक्तम् ॥ २ ॥

अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत ॥ ३ ॥

न चास्मिन्दोषं पश्येत् ॥ ४ ॥

यदृच्छायामसंवृत्तौ गतिरेव तस्मिन् ॥ ५ ॥

मातरि पितर्याचार्यवच्छुश्रूषा ॥ ६ ॥

समावृत्तेन सर्वे गुरव उपसंग्राह्याः ॥ ७ ॥

प्रोष्य च समागमे ॥ ८ ॥

भ्रातृषु भगिनीषु च यथापूर्वमुपसंग्रहणम् ॥ ९ ॥

नित्या च पूजा यथोपदेशम् ॥ १० ॥

ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेत् ॥ ११ ॥

---

I. 4, 13, 19 निवेशे हि वृत्ते Md.

I. 4, 13, 20 °मकरवमिति N., P. pr. m., P. U., M. U., Mr. U. I. pr. m. H., मकुर्वमिति Md., °मकुर्वमिति Mr. U. I. sec. m., °मकर्वीत G[1]., G. U[1]., मकुर्वीते G. U[2].

I. 4, 13, 22 नत्यमिकानि G. U[2].

I. 4, 14, 1 G. U[2] joins Sūtra 1-2.

I. 4, 14, 11. अभिवादयेत् N. U.

तूष्णीं वोपसंगृह्णीयात् ॥ १२ ॥
दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम् ।
त्रिवर्षपूर्वः श्रोत्रियः अभिवादनमर्हति ॥ १३ ॥
ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् ॥ १४ ॥
विषमगतायागुरवे नाभिवाद्यम् ॥ १५ ॥
अन्वारुह्य वाभिवादयीत ॥ १६ ॥
सर्वत्र तु प्रत्युत्थायाभिवादनम् ॥ १७ ॥
अप्रयतेन नाभिवाद्यम् ॥ १८ ॥
तथाप्रयताय ॥ १९
अप्रयतश्च न प्रत्यभिवदेत् ॥ २० ॥
पतिवयसः स्त्रियः ॥ २१ ॥
न सोपानद्वेष्टितशिरा अवहितपाणिर्वाभिवादयीत ॥ २२ ॥
सर्वनाम्ना स्त्रियो राजन्यवैश्यौ च न नाम्ना ॥ २३ ॥
मातरमाचार्यदारं चेत्येके ॥ २४ ॥
दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः ।
पितापुत्रौ स्म तौ विद्धि तयोस्तु ब्राह्मणः पिता ॥ २५ ॥
कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥ २६ ॥
अनामयं क्षत्रियम् ॥ २७ ॥

---

I. 4. 14. 13. MSS. 'योभिवादनम्', but the metre requires the reading given above which agrees with the practice observable in the ancient verses where no Sandhi is made at the end of a Pâda.

I. 4. 14. 14. ज्ञायमाने तु M. I.

I. 4. 14. 17. तु om. G. U[1], [2]

I. 4. 14. 18. G. U[1] om. this Sûtra. अप्रयतो नाभि G[1]

I. 4. 14. 19. N. U., P., M. U. G. U[2] join Sûtras 19. 20; but all MSS. of the Com. except M. U. have before Sûtra 18 उत्तरे द्वे सूत्रे निगदसिद्धे and a Com. on S. 20. G. U[2] joins S. 18. 20 and reads तथा प्रयतश्चाप्रयताय.

I. 4. 14. 20. अभिवादयेत् N. U.

I. 4. 14. 22. शिरावहित G. U[1], M. U.

I. 4. 14. 23. P. U. G. U[2] join Sûtras 23. 24.

I. 4. 14. 25. स्मतौ Md., P. U. text sec. m., P. s.c. m. N. G. U[2] pt. m.

अनष्टं वैश्यम् ॥ २८ ॥
आरोग्यँ शूद्रम् ॥ २९ ॥
नासंभाष्य श्रोत्रियं व्यतिव्रजेत् ॥ ३० ॥
अरण्ये च स्त्रियम् ॥ ३१ ॥ १४ ॥
॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने चतुर्थः पटलः समाप्तः ॥

१. ५. १५.

उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥ १ ॥
भूमिगतास्वप्स्वाचम्य प्रयतो भवति ॥ २ ॥
यं वा प्रयत आचामयेत् ॥ ३ ॥
न वर्षधारास्वाचामेत् ॥ ४ ॥
तथा प्रदरोदके ॥ ५ ॥
तप्ताभिश्चाकारणात् ॥ ६ ॥
रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् ॥ ७ ॥
शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात् ॥ ८ ॥
नग्नो वा ॥ ९ ॥
नाप्सु सतः प्रयमणं विद्यते ॥ १० ॥
उत्तीर्य त्वाचामेत् ॥ ११ ॥
नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥ १२ ॥
मूढस्वस्तरे चासँस्पृशन्नन्यानप्रयतान्प्रयतो मन्येत ॥ १३ ॥
तथा तृणकाष्ठेषु निखातेषु ॥ १४ ॥

---

I. 4, 14, 31 N U, G U[2], Mr U I, II, joins this S with the preceding.
I. 5, 15, 3. आचमयेत् M. U. text, G. U[2], G U[1] Com., आचामेत् G[1] G. U[1], text.
I. 5, 15, 14 निग G[1], निघातेषु G[1], G, U[2].

प्रोक्ष्य वास उपयोजयेत् ॥ १५ ॥
शुनोपहतः सचेलोवगाहेत ॥ १६ ॥
प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥ १७ ॥
अग्निं नाप्रयत आसीदेत् ॥ १८ ॥
इषुमात्रादित्येके ॥ १९ ॥
न चैनमुपधमेत् ॥ २० ॥
खट्वायां च नोपदध्यात् ॥ २१ ॥
प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमनं तत्र वासो धार्म्यो ब्राह्मणस्य ॥ २२ ॥
मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान्रेतसश्च ये लेपास्तान्प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥ २३ ॥ १५ ॥

## ५.१. १६.

तिष्ठन्नाचामेत्प्रह्वो वा ॥ १ ॥
आसीनस्त्रिराचामेद्धृदयङ्गमाभिरद्भिः ॥ २ ॥
त्रिरोष्ठौ परिमृजेत् ॥ ३ ॥
द्विरित्येके ॥ ४ ॥
सकृदुपस्पृशेत् ॥ ५ ॥
द्विरित्येके ॥ ६ ॥
दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेच्चक्षुषी नासिके श्रोत्रे च ॥ ७ ॥

I 5, 15, 16. सचेलो N. U

I. 5. 15, 18 N. om Sūtras 18 23.

I. 5, 15, 22. धर्म्यः धर्मः G. U¹.-Com, धर्म्यः धर्म्यः G. U² Com.; वासो G.U¹. text, धर्म्यः धर्मदृक्षः G U² Com.

I 5, 16, 7. शिरश्चेन्द्रि N U;-G. U² divides the Sūtra into three.

अथाप उपस्पृशेत् ॥ ८ ॥

भोक्ष्यमाणस्तु प्रयतोपि द्विराचामेद् द्विः परिमृजेत्सकृदुपस्पृशेत्॥९॥

श्वावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् ॥ १० ॥

न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति ॥ ११ ॥

य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् ॥ १२ ॥

ये भूमौ न तेष्वाचामेदित्येके ॥ १३ ॥

स्वप्ने क्षवथौ शृङ्खाणिकाश्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वामेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् ॥ १४ ॥

आर्द्रं वा शकृदोषधीर्भूमिं वा ॥ १५ ॥

हिंसार्थेनासिना मांसं छिन्नमभोज्यम् ॥ १६ ॥

दद्भिरपूपस्य नापच्छिन्द्यात् ॥ १७ ॥

यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यम् ॥ १८ ॥

तथानुत्थितायां सूतिकायाम् ॥ १९ ॥

अन्तःशवे च ॥ २० ॥

अप्रयतोपहतमन्नमप्रयतं न त्वभोज्यम् ॥ २१ ॥

अप्रयतेन तु शूद्रेणोपहृतमभोज्यम् ॥ २२ ॥

यस्मिँश्चान्ने केशः स्यात् ॥ २३ ॥

---

I 5, 16, 9 G[1] adds द्विरित्येके

I 5, 16, 10. शावा° N U, Md., °पर्यान्तौ आव° G. U[1] pr m

I. 5, 16, 11. G U[1,3] make यावन्न—शति a separate Sutra, अन्तरास्ये सद्भिः om G U[3], उपस्पृशेत् Md.

I. 5, 16, 13. ये भूमौ न तेष्वाचमनं विहितं ये भूमौ न तेष्वाचामेदित्येके Md.

I 5, 16, 14. सिंघाणिका° N. U, शिंघाणिका N, P. U, Md, Mr U. I, II, G. U[3], शिंखाणिका G[1], °श्चवालम्भे G[1], G. U[3].

I 5, 16, 21 अप्रयतोपहृतं P., N, N. U.[1] but the Com. स्पृष्टम्.

अन्यद्वामेध्यम् ॥ २४ ॥
अमेध्यैरवमृष्टम् ॥ २५ ॥
कीटो वामेध्यसेवी ॥ २६ ॥
मूषकलाङ्गं वा ॥ २७ ॥
पदा वोपहतम् ॥ २८ ॥
सिचा वा ॥ २९ ॥
शुना वापपात्रेण वा दृष्टम् ॥ ३० ॥
सिचा वोपहृतम् ॥ ३१ ॥
दास्या वा नक्तमाहृतम् ॥ ३२ ॥
भुञ्जानं वा ॥ ३३ ॥ १६ ॥

१. ५. १७.

यत्र शूद्र उपस्पृशेत् ॥ १ ॥
अनर्हद्भिर्वा समानपङ्क्तौ ॥ २ ॥
भुञ्जानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ॥ ३ ॥
कुत्सयित्वा वा यत्रान्नं दद्युः ॥ ४ ॥
मनुष्यैरवघ्रातमन्यैर्वामेध्यैः ॥ ५ ॥
न नावि भुञ्जीत ॥ ६ ॥
तथा प्रासादे ॥ ७ ॥
कृतभूमौ तु भुञ्जीत ॥ ८ ॥

---

I. 5 16, 25 अवसृष्ट N, P pr m., P U, M U, but the Com स्पृष्टम्
I 5, 16, 26 वामेध्यसेवी—शुना वा, S. 26 30, om G[1]
I 5, 16 28 N U joins this with the preceding Sutra.
I. 5, 16, 30 स्पृष्ट Md.
I 5 16, 31 अपरिहितस्य add the Dev Mss., according to G. U[1],[2] the word belongs to the Com.
I. 5 17, 3. अनुत्थाय G[1], P, P U N U, Md, M. U, Mr U I, II.
I. 5 17, 4. वा om. G U[2],[3].
I. 5, 17, 8. तु om. Md.

अनाप्रीते मृन्मये भोक्तव्यम् ॥ ९ ॥

आप्रीतं चेदभिदग्धे ॥ १० ॥

परिमृष्टं लौहं प्रयतम् ॥ ११ ॥

निर्लिखितं दारुमयम् १२ ॥

यथागमं यज्ञे ॥ १३ ॥

नापणीयमन्नमश्नीयात् ॥ १४ ॥

तथा रसानाममाँसमधुलवणानीति परिहाप्य ॥ १५ ॥

तैलसर्पिषी तूपयोजयेदुदकेवधाय ॥ १६ ॥

कृतान्नं पर्युषितमखाद्यापेयानाद्यम् ॥ १७ ॥

शुक्तं च ॥ १८ ॥

फाणितपृथुकतण्डुलकरम्भभरुजसभक्तुशाकमाँसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् ॥ १९ ॥

शुक्तं चापरयोगम् ॥ २० ॥

सर्वं मद्यमपेयम् ॥ २१ ॥

तथैलकं पयः ॥ २२ ॥

उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति ॥ २३ ॥

धेनोश्चानिर्दशायाः ॥ २४ ॥

तथा कीलालौषधीनां च ॥ २५ ॥

करञ्जपलण्डुपरारीकाः ॥ २६ ॥

---

I 5, 17, 10 अभिदग्धे N U, अविदग्ध G U[1], अविदग्धे Md.

I 5 17,11 लोह G[1], G U[3], G U[1] text, G U[3] pr m, लोहित Md.

I. 5, 17, 15 रसानामाममाँस P, N, °नामाँस N U, रसानाममास° G U[1], रसानामामस° G[1]

I 5, 17, 18 च om. Md, चूष G U[3], M U.

I 5, 17, 19 करंभ° P U pr m, G[1], M U text

I 5, 17, 22 पुत्रक Grantha Mss.

I 5, 17, 25 वनस्पतीनां add P U, N

I 5, 17, 26 कारञ्ज N U, करञ्ज° G U[3], पलाण्डु° Dev Mss., पलारीका Md, G Com. pr m

यच्चान्यत्परिचक्षते ॥ २७ ॥

क्याकुभोज्यमिति हि ब्राह्मणम् ॥ २८ ॥

एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम् ॥ २९ ॥

धेन्वनडुहोर्भक्ष्यम् ॥ ३० ॥

मेध्यमानडुहमिति वाजसनेयकम् ॥ ३१ ॥

कुक्कुटो विकिराणाम् ॥ ३२ ॥

प्लवः प्रतुदाम् ॥ ३३ ॥

क्रव्यादः ३४ ॥

हंसभासचक्रवाकसुपर्णाश्च ॥ ३५ ॥

क्रुञ्चक्रौञ्चवार्ध्राणसलक्ष्मणवर्जम् ॥ ३६ ॥

पञ्चनखानां गोधाकच्छपश्वाविट्छल्यकखड्गशशपूतिखषवर्जम् ॥ ३७ ॥

अभक्ष्यश्चेटो मत्स्यानाम् ॥ ३८ ॥

सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥ ३९ ॥ १७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने पञ्चमः पटलः समाप्तः ॥

---

I. 5, 17, 30 कारणाडुह्यम् N U according to the Hir Dh. S

I. 5, 17, 31 मेध्य मानमा° N U, वाजस नेयिकम् N U, G U[3]

I. 5, 17, 33 प्लव Mr U I II.

I. 5, 17, 34 क्रव्यादा G[1], G U[1,3] Com G U[1] joins Sutras 34 35

I. 5, 17, 35 °मरस° instead of भास° N U

I. 5, 17, 36 वार्ध्रीणस° Md, कुरच° Md °क्रौञ्च is a vedic nom. dual, not a plural, as the Com holds

I. 5, 17, 37 °श्वाविच्छल्यक° Mr U I., pr m Mr U II. N,P,M,U mentioned in the Com. °विट्श° G[1], G U[2], approved of in the Com °विड्ढ्रन° G U[3]; पूतिखष° G[1], G U[1]

I. 5, 17, 38 G U[1], joins Sutras 38 39

I. 5, 17, 39 सर्पशीर्षी N, N U P U, M U, Mr U I, II, °र्षे G U[3], मृदुर P U, H. U, G U[1]; मुदरः N U

## १. ६. १८.

मध्वामं मार्गं माँसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिगृह्याणि ॥ १ ॥

एतान्यपि नानन्तेवास्याहृतानीति हारीतः ॥ २ ॥

आमं वा गृह्णीरन् ॥ ३ ॥

कृतान्नस्य वा विरसस्य ॥ ४ ॥

न सुभिक्षाः स्युः ॥ ५ ॥

स्वयमप्यवृत्तौ सुवर्णं दत्त्वा पशुं वा भुञ्जीत ॥ ६ ॥

नात्यन्तमन्ववस्येत् ॥ ७ ॥

वृत्तिं प्राप्य विरमेत् ॥ ८ ॥

त्रयाणां वर्णानां क्षत्रियप्रभृतीनाँ समावृत्तेन न भोक्तव्यम् ॥ ९ ॥

प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यम् ॥ १० ॥

यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति ॥ ११ ॥

चरितनिर्वेषस्य भोक्तव्यम् ॥ १२ ॥

सर्ववर्णानाँ स्वधर्मे वर्तमानानां भोक्तव्यँ शूद्रवर्जमित्येके ॥ १३ ॥

तस्यापि धर्मोपनतस्य ॥ १४ ॥

सुवर्णं दत्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५ ॥

सङ्घान्नमभोज्यम् ॥ १६ ॥

परिक्रुष्टं च ॥ १७ ॥

---

I. 6, 18, 1 प्रतिग्रह्याणि P, °ग्राह्य° G¹, P. U, N U, M U, Mr. U 1, II.

I. 6, 18, 3 8 N U joins Sūtras 3-4, divides Sutra 6 into three and joins Sutras 7-8.

I. 6, 18, 11. यत्र प्रा° N. U., G¹.

I 6, 18, 12. °निर्वेशस्य Dev. Mss., except N, P.

I. 6, 18, 13. वर्तमानानां च Md शूद्रवर्जम् om. G. U² text

I. 6, 18, 16. न भोज्य P. U, M. U; G. U,¹ joins Sūtras 16-17.

सर्वेषां च शिल्पाजीवानाम् ॥ १८ ॥

ये च शस्त्रमाजीवन्ति ॥ १९ ॥

ये चाधिम् ॥ २० ॥

भिषक् ॥ २१ ॥

वार्धुषिकः ॥ २२ ॥

दीक्षितोऽक्रीतराजकः ॥ २३ ॥

अग्नीषोमीयसँस्थायामेव ॥ २४ ॥

हुतायां वा वपायां दीक्षितस्य भोक्तव्यम् ॥ २५ ॥

यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥

क्लीबः ॥ २७ ॥

राज्ञां प्रैषकरः ॥ २८ ॥

अहविर्याजी ॥ २९ ॥

चारी ॥ ३० ॥

अविधिना च प्रव्रजितः ॥ ३१ ॥

यश्चाग्नीनपास्यति ॥ ३२ ॥

यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥ ३३ ॥ १८ ॥

## १. ६. १९.

मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥ १ ॥

---

I 6, 18, 18 च om. P. U, M U, Mr U I, II, जीविनाम् the same

I 6, 18, 25. वा om. G U² text and Com

I 6, 18, 26 वा om N U, हि om. P N Mr U I, II, P U, N U, G U², ³

I. 6, 18, 28 प्रेषकर G¹, G U¹, ², M U Com, प्रैषक P pr m, N, P U text प्रेषकः M. U. text.

I. 6 18, 30 चारकी G U², G U³

I 6, 18, 31 प्रव्रजितः. P U, Mr U I, प्रव्रजतो Md

I 6, 18 33 वर्जयन्ति' Md, G U³ divides the Sutra into two, beginning the second with सर्वान्नी

I. 6, 19, 1 बद्धणिक., प्रत्युपवेशयीत Md.

क अश्यान्नः ॥ २ ॥

य ईप्सेदिति कण्वः ॥ ३ ॥

पुण्य इति कौत्सः ॥ ४ ॥

यः कश्चिद्दद्यादिति वार्ष्यायणिः ॥ ५ ॥

यदि ह रजः स्थावरं पुरुषे भोक्तव्यमथ चेच्चलं दानेन निर्दोषो भवति ॥ ६ ॥

शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः ॥ ७ ॥

सर्वतोपेतं वार्ष्यायणीयम् ॥ ८ ॥

पुण्यस्येप्सतो भोक्तव्यम् ॥ ९ ॥

पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ १० ॥

यतः कुतश्चाभ्युद्यतं भोक्तव्यम् ॥ ११ ॥

नाननियोगपूर्वमिति हारीतः ॥ १२ ॥

अथ पुराणे श्लोकावुदाहरन्ति ।

उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् ।

भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥

न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च ।

न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यत इति ॥ १३ ॥

चिकित्सकस्य मृगयोः शल्यकृन्तस्य पाशिनः ।

कुलटायाः पण्ढकस्य च तेषामन्नमनाद्यम् ॥ १४ ॥

---

I. 6, 19, 5 कश्चन P, कश्चिद्दिति G[1] वार्ष्यायणीयः G U[1].

I. 6, 19, 6 यदि हि N, P pr. m, P U., N U, Mr U I, II यदि रज° G U[1], यदि रह रज° G U[3]

I 6, 19, 7 काण्वपुष्करसादी G[1].

I 6 19, 8 सर्वतोपेतमिति G U[1]

I. 6, 19, 9 °नीप्सितो G U[1,2,3], P. sec m, but see the com

I. 6, 19, 12 नाननुयोग° Md, N U, भाननुयोग° G[1].

I 6, 19, 13 अभ्यवमन्यते Devanāgari Mss, After this Sutra, N U, P. U, M U, Mr U I, II, Md. insert another verse —

श्रद्धापूत तु [श्रद्धापूतस्य Md.] भोक्तव्य घोर स्यापि विशेषतः। न त्वेव बहुयाज्यस्य यश्चोप पलयते बहूनिति ॥

But the Grantha Mss show no trace of it and the com neither explains nor refers to it

I 6 19, 14. पण्ढकस्य G U[1,2,3].

अथाप्युदाहरन्ति ।
अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशँसति ।
स्तेनः प्रमुक्तो राजनि याचन्ननृतसंकर इति ॥ १५ ॥ १९ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने षष्ठः पटलः समाप्तः ॥

१. ७. २०.

नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥ १ ॥
निष्फला ह्यभ्युदये भवन्ति ॥ २ ॥
तद्यथाम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते ।
एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ॥ ३ ॥
नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥ ४ ॥
अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु ॥ ५ ॥
न धर्माधर्मौ चरत आवँ स्व इति । न देवगन्धर्वा न पितर इत्याचक्षतेयं धर्मोयमधर्म इति ॥ ६ ॥

I. 6, 19, 15 The text is that of N, G[1], G. U[1,3] have the same, but °सगर इति, G. U[2] reads first °सकर, which was corrected to सगर and then again changed to सकर, regarding the correct reading see the com.—M. U. has first the Sutra abbreviated in the manner, common in southern Mss., अथाप्युदाहरति अन्नादे भ्रूणहा मार्ष्टि कर इति ॥ Then follows an interpolation, पर्यां भार्यापचारिणी गुरौ शिष्यश्च याज्य and in the the margin श्चाविष्प स्तेनो राजनि किल्बिष । अनेनाभिशसति स्तेनः प्रमुक्तो राजनि याचन्ननृत सकर इति । In Mr. U. I, II, P. U., P., Md. the interpolation is mixed up with the text. अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याप चारिणी । गुरौ शिष्यश्च याज्यश्चाविष्प स्तेनो राजनि [राजनीति Md.] राजनि किल्बिषम् [P. U., Mr. U. I. II.] स्तेन प्रमुक्तो राजनि अनेना अभिशसति । याचन्ननृतसकर इति ॥ N. U. text has apparently had the same reading which however has been mixed up with the Com. The latter, as given in the Grantha Mss., N. U., M. U., and Mr. U. II does not not notice the interpolated words and all Mss. of the com. state that स्तेन, प्रमुक्तो राजनि is the third pada.

I. 7, 20, 1 M. U., Ms. U. I. II, join Sutras 1–2.

I. 7, 20, 3 इत्यनूत्पद्यते G. U[2], इत्यनूत्पद्येत P. G[1], इत्यनूत्पद्यन्ते N. U., P. U., पद्यन्ते Devanagari Mss.

I. 7, 20, 4 G. U[1] joins this Sutra with the preceding. नो चेदनूत्पद्यन्ते om. Md.

I. 7, 20, 5 अनसूयु॰ G[1], G. U[1,3] text, M. U. text

यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यद्गर्हन्ते सोऽधर्मः ॥ ७ ॥
सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥ ८ ॥
एवमुभौ लोकावभि जयति ॥ ९ ॥
अविहिता ब्राह्मणस्य वणिज्या ॥ १० ॥
आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥ ११ ॥
मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलिमरीचे धान्यं मांसमायुधं सुकृताशां च ॥ १२ ॥
तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥ १३ ॥
अविहितश्चैतेषां मिथो विनिमयः ॥ १४ ॥
अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥ १५ ॥
अक्रीतपण्यैर्व्यवहरेत ॥ १६ ॥ २० ॥

१. ७. २१.

मुञ्जवल्वजैर्मूलफलैः ॥ १ ॥
तृणकाष्ठैरविकृतैः ॥ २ ॥
नात्यन्तमन्ववस्येत् ॥ ३ ॥
वृत्तिं प्राप्य विरमेत् ॥ ४ ॥
न पतितैः संव्यवहारो विद्यते ॥ ५ ॥

---

I. 7, 20. 7, यत्त्वा° G¹., G. U ¹·²·³. P. sec. m., Md, यं N , P. pr m , P. U , N. U., M. U , Mr. U. I, II, यं गर्हन्ते the same ; G U³ om. the second relative clause.

I. 7, 20, 8, G U³ joins Sutras 8–9, N. U. adds स्वधर्मनिरतानां before सम्यग्वि°

I. 7, 20, 12. °पिप्पली P. U., N. U., N , M, U., Mr. U. I, II पिप्पिली G. U¹, मरीचि G¹, G U³, M. U , मरीच G U¹ sec. m , मरिचे. P. U , Mr. U. I, II, Md , आयुधान् Md.

I. 7, 20, 16. G. U³. M. U. join this Sutra with I. 7, 21, 1.

I. 7, 21, 3, G. U³ joins Sutras 2–4, P. U., M U., Sūtras 3–4, अत्यान्त G U³ text,

तथापपात्रैः ॥ ६ ॥

अथ पतनीयानि ॥ ७ ॥

स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरिति योनिसंबन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः ॥ ८ ॥

गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान् ॥ ९ ॥

नागुरुतल्पे पततीत्येके ॥ १० ॥

अधर्माणां तु सततमाचारः ॥ ११ ॥

अथाशुचिकराणि ॥ १२ ॥

शूद्रगमनमार्यस्त्रीणाम् ॥ १३ ॥

प्रतिपिद्धानां मांसभक्षणम् ॥ १४ ॥

शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम् ॥१५॥

मनुष्याणां मूत्रपुरीषप्राशनम् ॥ १६ ॥

शूद्रोच्छिष्टमपपात्रागमनं चार्याणाम् ॥ १७ ॥

एतान्यपि पतनीयानीत्येके ॥ १८ ॥

अतोन्यानि दोषवन्त्यशुचिकराणि भवन्ति ॥ १९ ॥

दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥ २०॥ २१ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने सप्तमः पटलः समाप्तः ॥

---

I. 7, 21, 8. आभिशस्यं N., N.U., P; P. U., M.U.; असंयोगि॰ M. U. text. G. U[2].

I. 7, 21, 9. ॰सखीं both times G[1], Md, P. U., G. U[1]; गुर्वीसखीं N, but see the Com; गुरुतल्पान् M. U text.

I. 7, 21, 13. शूद्रीग॰ G. U[3] text.

I. 7, 21, 14. प्रतिपिद्धानां च Md.

I. 7, 21, 15. च om. Devanāgari Mss, G U[2, 3] join Sūtras 15–16.

I. 7, 21, 16. मनुष्याणां च Md.

I. 7, 21, 18. एतान्येव G. U[1, 2].

## १. ८. २२.

अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंँहितानानैश्चारिकान् ॥ १ ॥
आत्मलाभान्न परं विद्यते ॥ २ ॥
तत्रात्मलाभीयाञ्श्लोकानुदाहरिष्यामः ॥ ३ ॥
पूः प्राणिनः सर्व एव गुहाशयस्य ।
अहन्यमानस्य विकल्मषस्य ।
अचलं चलनिकेतं येनुतिष्ठन्ति तेमृताः ॥ ४ ॥
यदिदमिदि हेदि ह लोके विषयमुच्यते ।
विधूय कविरेतदनुतिष्ठेद्गुहाशयम् ॥
आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम् ।
अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया ।
महान्तं तेजसस्कायँ सर्वत्र निहितं प्रभुम् ॥ ६ ॥
सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः ।
अनङ्गोशब्दोशरीरोस्पर्शश्च महाञ्छुचिः ।
स सर्वं परमा काष्ठा स वैषुवतँ स वै वैभाजनं पुरम् ॥ ७ ॥
तं योनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् ।
दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे ॥ ८ ॥ २२ ॥

---

I. 8, 22, 1. आध्यात्मिकान्यो° Md., P. sec m., but see the Com., अथाध्या° M.U. text, °संहितान् P.U., M.U., Mr.U.I, II.

I. 8, 22, 4. L. a, येव G. U² text, L. c, याक्चलं चल° G¹.

I. 8, 22, 5. L. a, यदिदमि° G U¹ text, दमिति G¹; विषय ड° G. U² text, तेवधूय Md. The proper division of the words in L a probably is यत्। इदम्। इत्। इह। इत्। इह। लोके। In L. b, अवधूय is probably thr original reading, because विधूय is against the metre and अवधूत is one of the old names for a जीवन्मुक्त,

I. 8, 22, 6. L. a, अलब्ध्वैतद् P. U, Mr. U. I. II, G. U², N, G¹, स्वेवस्व G. U², L. b, साधिष्ठान G U¹ text स्वाधिष्ठानं G¹, L. c, तेजस्काय Dev. Mss. of, the Com, महान्तं विभुमात्मानं सर्वत्र G U².

I. 8, 22, 7. वैषुवतं P. U, Mr U. I, II, वै om. the same. Read अस्पर्शश्च, as the metre requires.

I. 8, 22, 8. P, N.U. add इति at the end

१. ८. २३.

आत्मन्पश्यन्सर्वभूतानि न मुह्येच्चिन्तयन्कविः।
आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति ॥ १ ॥
निपुणोणीयान्बिसोर्णाया यः सर्वमावृत्य तिष्ठति।
वर्षीयाँश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति।
स इन्द्रियैर्जगतोस्य ज्ञानादन्योनन्यस्य ज्ञेयात्परमेष्ठी विभाजः।
तस्मात्कायाः प्रभवन्ति सर्वे स मूलँ शाश्वतिकः स नित्यः ॥ २ ॥
दोषाणां तु विनिर्घातो योगमूल इह जीविते।
निर्हृत्य भूतदाहीयान्क्षेमं गच्छति पण्डितः ॥ ३ ॥
अथ भूतदाहीयान्दोषानुदाहरिष्यामः ॥ ४ ॥
क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥५॥
अक्रोधोहर्षोरोषोलोभोमोहोदम्भोद्रोहः सत्यवचनमनत्याशोपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवँ शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशँसं तुष्टिरिति सर्वाश्रमाणाँ समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति ॥ ६ ॥ २३ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्नेष्टमः पटलः समाप्तः ॥

---

I. 8, 23, 1 The text probably had originally the Vedic neuter plural सर्वभूता which the metre requires.

I. 8, 23, 2. L. a, बिसोर्णीयास्सर्व° G¹, G. U³, L. c, स om G. U³, अन्यो om G U³, अन्योन्यस्य N, G¹, G U¹ text, L. d, कायाधा. G¹, नित्यः कः Md

I. 8, 23, 3 निर्घातो all Mss, except G¹. G U², मृतदाहादीन् N, U. text भूतदाहान् P. sec. m., Md, निहृत्य Grantha Mss.; N. om. भूत पण्डितः The metre requires योगमूलेह to be read.

I. 8, 23, 4 अथ om. N

I 8, 23, 5 आनात्म्यं Md., G U¹ text G U³ text and Com आनात्मिकम्, G¹.

I. 8, 23, 6 °शोपैशुनमन° om G. U³ text and Com, आर्यवम् Dev Mss. of the Com and Md ;आर्ज्जवमार्दवं G¹, G U, आनृशस्यं P, Md, G¹, P. U, text, Mr U. I, 11 text, आनृशंस्यम G U³. text; but see the Com.; विधाना G U¹ text; सर्वगामी G U³, text, but see the Com

१. ९. २४.

क्षत्रियँ हत्वा गवाँ सहस्रं वैरयातनार्थं दद्यात् ॥ १ ॥

शतं वैश्ये ॥ २ ॥

दश शूद्रे ॥ ३ ॥

ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः ॥ ४ ॥

स्त्रीषु चैतेषामेवम् ॥ ५ ॥

पूर्वयोर्वर्णयोर्वेदाध्यायँ हत्वा सवनगतं वाभिशस्तः ॥ ६ ॥

ब्राह्मणमात्रं च ॥ ७ ॥

गर्भं च तस्याविज्ञातम् ॥ ८ ॥

आत्रेयीं च स्त्रियम् ॥ ९ ॥

तस्य निर्वेषः ॥ १० ॥

अरण्ये कुटिं कृत्वा वाग्यतः शवशिरध्वजोऽर्धशाणीपक्षमधानाभ्युपरिजान्वाच्छाद्य ॥ ११ ॥

तस्य पन्था अन्तरा वर्त्मनी ॥ १२ ॥

दृष्ट्वा चान्यमुत्क्रामेत् ॥ १३ ॥

खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत ॥ १४ ॥

कोऽभिशस्ताय भिक्षामिति सप्तागाराणि चरेत् ॥ १५ ॥

सा वृत्तिः ॥ १६ ॥

अलब्धोपवासः ॥ १७ ॥

गाश्च रक्षेत् ॥ १८ ॥

---

1. 9, 24, 4. प्रायश्चित्तार्थम् P, N, G. U[1] pr. m, G. U[3], सर्वत्र तु G[1]

I. 9, 24, 8. गर्भं वा विज्ञातं Mr. U. I, II.

1. 9, 24, 10. निर्वेशः N. U,

1. 9, 24, 11. कुटीं N. U, G,U[3]., G, U[3] doubtful; शवशिरो° Md.

I. 3, 24, 12. पन्थान्तरा G. U[1 3].

I. 9, 24, 14 लौहितकेन P., खड्न P pr.m corrected to °खण्डनसेन, शरावेण वा Md.; ग्रामे प्रतिष्ठेत om. G. U[3 3] text,

I 9, 24, 17. अलब्ध्योपवासः P. M. U., G. U[3]. The reading of the text stands for अलब्धे उपवासः with the double Sandhi common in Vedic texts.

तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेर्धः ॥ १९ ॥
द्वादश वर्षाणि चरित्वा सिद्धः सद्भिः संप्रयोगः ॥ २० ॥
आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योपजिगीषमाणो वसेत् त्रिः प्रतिराद्धोपजित्य वा मुक्तः ॥ २१ ॥
आश्वमेधिकं वावभृथमवेत्य मुच्यते ॥ २२ ॥
धर्मार्थसंनिपातेर्थग्राहिण एतदेव ॥ २३ ॥
गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ॥ २४ ॥
नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥ २५ ॥

१. ९. २५. ॥ २४ ॥

गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ॥ १ ॥
ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात् ॥ २ ॥
सुरापोग्निस्पर्शां सुरां पिबेत् ॥ ३ ॥
स्तेनः प्रकीर्णकेशोंसे मुसलमादाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्याद्वधे मोक्षः ॥ ४ ॥
अनुज्ञातेनुज्ञातारमेनः ॥ ५ ॥
अग्निं वा प्रविशेत्तीक्ष्णं वा तप आयच्छेत् ॥ ६ ॥
भक्तापचयेन वात्मानं समाप्नुयात् ॥ ७ ॥

---

I 9, 24, 21 कुटीं G, U¹, G, U¹ Com, °गव्युपजि° G U¹ text.

I 9, 24, 23 धर्मार्थसं° G¹

I 9, 24, 25 नास्यास्मिन् Md The same Ms adds गवां हत्वा त्रिषवणस्नायी चरेद् द्वादश यथाविध पञ्चदश्या ॥ which do not belong to Haradatta s text, as he says in the Com on I 9 26 I regarding the wilful killing of a cow बुद्धिपूर्व तु गां हत्वा वैश्यवदि त्यादि स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ G, U² begins a new Sutra with कल्मष

I 9, 25, 1 परिवास्य Md, आदाय Md.

I 9, 25 2 वा om Md

I 9, 25, 6 P U & M. U begin a new Sutra with तीक्ष्ण

कृच्छ्रसंवत्सरं वा चरेत् ॥ ८ ॥

अथाप्युदाहरन्ति ॥ ९ ॥

स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा चतुर्थकाला मितभोजनाः स्युरपोऽभ्यवेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरप पापं नुन्दते ॥ १० ॥

प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा संग्रामं गत्वावतिष्ठेत । तत्रैनँ हन्युः ॥ ११ ॥

अपि वा लोमानि त्वचं माँसमिति हावयित्वाग्निं प्रविशेत् ॥ १२ ॥

वायसप्रचलाकबर्हिणचक्रवाकहँसभासमण्डूकनकुलडेरिकाश्वहिँसायाँ शूद्रवत्प्रायश्चित्तम् ॥ १३ ॥ २५ ॥

## १. ९. २६

धेन्वनडुहोश्चाकारणात् ॥ १ ॥

धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥ २ ॥

अनाक्रोश्यमाक्रुश्यानृतं वोक्त्वा त्रिरात्रमक्षीराक्षारालवणभोजनँ ॥ ३ ॥

शूद्रस्य सप्तरात्रमभोजनम् ॥ ४ ॥

स्त्रीणां चैवम् ॥ ५ ॥

येष्वाभिशस्त्यं तेषामेकाङ्गं छित्त्वाप्राणहिँसायाम् ॥ ६ ॥

---

I. 9, 25, 8 कृच्छ्र N U, N[1] P, M U, Mr U I II, कृच्छ्रस° G[1], G U[3] om. the text of the Sutra

I 9, 25, 10 °पोऽभ्युपेयु G U[1 3], °पोऽभ्यपेयु G U[3] text, वर्षैरप P, P U, M U, Mr U. I

I 9, 25, 13 वायसकृकलास° M.U, P.U दरिका° Md वरीका G[1], G U[1] text,

I 9, 26, 2. धुरश्चप्रवाह° G[1], धुर्यवाहप्रवाहप्र° Md, धूर्यवाह° M U.

I 9, 26 3 चोक्त्वा P U, N U, Mr U.1

I 9, 26, 6. °प्राणिहिंसायां Md., N., G[1] G U[1 3].

अनार्यवपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने शूद्रायां च रेतः सिक्त्वायोनौ च दोषवच्च कर्माभिसंधिपूर्वं कृत्वानभिसंधिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वान्यैर्वा पवित्रैर्यथा कर्माभ्यासः ॥ ७ ॥

गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत ॥ ८ ॥

तस्य शूद्रः प्राश्नीयात् ॥ ९ ॥

मिथ्याधीतप्रायश्चित्तम् ॥ १० ॥

संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्स्वाध्याय एवोत्सृजमानो वाचमाचार्य आचार्यदारे भिक्षाचर्ये च ॥ ११ ॥

एवमन्येष्वपि दोषवत्स्वपतनीयेषूत्तराणि यानि वक्ष्यामः ॥ १२ ॥

काममन्युभ्यां वा जुहुयात्कामोकार्षीन्मन्युरकार्षीदिति जपेद्वा॥१३॥

पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूत उदकमुपस्पृश्य सावित्रीं प्राणायामशः सहस्रकृत्व आवर्तयेदप्राणायामशो वा ॥ १४ ॥

॥ २६ ॥

१. ९. २७.

श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य वा श्वोभूते महानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादध्याज्जपेद्वा ॥ १ ॥

---

I. 9, 26, 7 अनार्यवत्स्पै° Mr U, I, अनार्येर्स्पै° M U, G U[3] divides this Sutra into four, ending with (a) °स्तृशेत्, (b) भिर्वा, (c) पवित्रैः, (d) °भ्यास

I 9, 26, 8 °नावकीर्णिनिं° M. U text and Com

I. 9, 26 11 उत्सृज्यमानो Dev Mss, उत्सर्जमानो G[1], आचार्य om G U[2,3] text, आचार्यमाचार्य° G U[1] text आचार्यदाराचार्य° Md, °दारे वा Dev Mss भिक्षाचर्ये च N, P, P U

I 9, 26, 12. अपतनीयेषु om Md

I 9, 26, 13 कामोकार्षीन्मन्युरकार्षीदिति belongs according to M U and Mr. U I to the Com, जपेद्वा a separate Sutra, M. U, Mr U. I, II, P U, G U[2,3]

I 9, 26, 14 सहस्र कृत्व M U, सहस्रकृत्वा G[1], G U[5]; G U[4] makes the last two words a separate Sutra, महानदमुद° N U

I 9, 27, 1 महानद G U[1,4]; वा om Md

इष्टियज्ञक्रतून्वा पवित्रार्थानाहरेत् ॥ २ ॥
अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥ ३ ॥
तत्सप्तरात्रेणावाप्यते ॥ ४ ॥
हेमन्तशिशिरयोर्वोभयोः संध्योरुदकमुपस्पृशेत् ॥ ५ ॥
कृच्छ्रद्वादशरात्रं वा चरेत् ॥ ६ ॥
त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥ ७ ॥
एतमेवाभ्यसेत्संवत्सरँ स कृच्छ्रसंवत्सरः ॥ ८ ॥
अथापरम् । बह्वन्यप्यपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः कृतप्रायश्चित्तो भवति ॥ ९ ॥
अनार्याँ शयने बिभ्रद्ददद् वृद्धिं कषायपः ।
अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप् ॥ १० ॥
यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः ॥
चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥ ११ ॥
॥ २७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने नवमः पटलः समाप्तः ॥

## १. १०. २८.

यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा कण्वपुष्करसादी ॥ १ ॥

---

I. 9, 27, 3 नैष्पुरीष N. U., N; N. U. joins Sutras 3-4.
I. 9, 27, 6. कृच्छ्रं द्वा° Md., N.
I. 9, 27, 7. अयाचितं व्रतं Md.
I. 9, 27, 8. एवमेतान्य° P. U. text, एवमेव N. U, एतदेव G¹; अभ्यसेद् N., N.U., G¹; अभ्यस्येत्कृच्छ्रसंवत्सर स° Md.
I. 9, 27, 9. अनश्नन्पारा° P. U; °नश्पारा° M. U., °पतनिय्यानि G. U³.
I. 9, 27, 10 The metre points to the irregular Sandhi अब्राह्मणेव.
I. 9, 27, 11. अभ्युपायी P. sec. m., N.U., Mr. U. I, G. U¹·²·³; अभ्यवायी N.
I, 10, 28, 1. कदा च G. U³; काण्व° Md., N. U., G¹, G. U², om. G. U³ text, °पुष्करसादिः G. U¹.

सन्त्यपवादाः परिग्रहेष्विति चार्ष्यायणिः ॥ २ ॥
शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥ ३ ॥
अतिव्यपहारो व्यृद्धो भवति ॥ ४ ॥
सर्वत्रानुमतिपूर्वमिति हारीतः ॥ ५ ॥
न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत् ॥ ६ ॥
न चास्माद्भोगानुपयुञ्जीत ॥ ७ ॥
यदृच्छासंनिपात उपसंगृह्य तूष्णीं व्यतिव्रजेत् ॥ ८ ॥
माता पुत्रत्वस्य भूयाँसि कर्माण्यारभते तस्याँ शुश्रूषा नित्या पतितायामपि ॥ ९ ॥
न तु धर्मसंनिपातः स्यात् ॥ १० ॥
अधर्माहृतान्भोगाननुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्नक्षीराक्षारालवणं भुञ्जानो द्वादश वर्षाणि नागारं प्रविशेत् ॥ ११ ॥
ततः सिद्धिः ॥ १२ ॥
अथ संप्रयोगः स्यादार्यैः ॥ १३ ॥
एतदेवान्येषामपि पतनीयानाम् ॥ १४ ॥
गुरुतल्पगामी तु सुषिराँ सूर्मिं प्रविश्योभयत आदीप्याभिदहेदात्मानम् ॥ १५ ॥
मिथ्यैतदिति हारीतः ॥ १६ ॥
यो ह्यात्मानं परं वाभिमन्यतेभिशस्त एव स भवति ॥ १७ ॥

---

I. 10, 28, 2. परपरिग्रहेष्विति P. sec. m., G. U[2].
I. 10, 28, 3. °घासश्च G U[2]; °घासा G U[3] text
I. 10, 28, 4. अतिव्यपहार Md., N U. and Grantha Mss.; विरुद्धो G[1], G. U[1] [1]; वृद्धो G. U[2].
I. 10, 28, 5. मनुमिति° P., N.
I. 10, 28, 6 दर्शनार्थं N
I. 10, 28, 8. प्रतिव्रजेत् G[1].
I. 10, 28, 10 °संनिपातः Md. and Grantha Mss
I. 10, 28, 11. °क्षारलवण Md.; अधूकोप स्पर्शन G U[2].
I. 10, 28, 15 सूर्मि वा G[1]; दहेत P. U.
I. 10, 28, 17. भवतीति G[1].

एतेनैव विधिनोत्तमादुच्छ्वासाचरेत् । नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥ १८ ॥

दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् ॥ १९ ॥

स्त्रियास्तु भर्तृव्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥ २० ॥

अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थमादाय ॥ २१ ॥ २८ ॥

१. १०. २९.

खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणश्चङ्क्रम्येत को भ्रूणघ्ने भिक्षामिति । ग्रामे प्राणवृत्तिं प्रतिलभ्य शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि मे आर्यैः संप्रयोगो विद्यते । एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् । नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥ १ ॥

यः प्रमत्तो हन्ति प्राप्तं दोषफलम् ॥ २ ॥

सह संकल्पेन भूयः ॥ ३ ॥

एवमन्येष्वपि दोषवत्सु कर्मसु ॥ ४ ॥

तथा पुण्यक्रियासु ॥ ५ ॥

परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत ॥ ६ ॥

---

I. 10, 28, 19 °व्यतिक्रमणे G[1]. G. U[1] text

I. 10, 28, 20 भर्तृव्यतिक्रमे P. U., text, P., N. U., text, M. U. text, Md., भर्तुर्व्येति° G[1] G. U[1,2], भर्तृव्यति° G. U[3], but see the Com., which proves the correctness of the reading of N.

I. 10, 28, 21. प्रतिपानार्थम् N., G. U[3], प्रतिपादनार्थम् P. U., M. U. joins this Sutra with the next.

I. 10, 29, 1. चंक्रमेत P. U., P. N., चंक्रमेद् M. U.

I. 10, 29, 2. प्रमत्त G. U[1] text, प्रयतो N. U. text, P. pr. m.

I. 10, 29, 5 तथा च G. U[3].

I. 10, 29, 6. नाददीत P., Md, P. U. pr. m., M. U., Mr. U. I.

यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन्दोष इति पुराणे ॥ ७ ॥

अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति साँशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः ॥ ८ ॥

पुत्रान्संनिष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्याः संप्रत्यपत्स्यतेति ॥ ९ ॥

अथापि न सेन्द्रियः पतति ॥ १० ॥

तदेतेन वेदितव्यम् । अङ्गहीनो हि साङ्गं जनयति ॥ ११ ॥

मिथ्यैतदिति हारीतः ॥ १२ ॥

दधिधानीसधर्मा स्त्री भवति ॥ १३ ॥

यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियते । एवमशुचि शुक्लं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते ॥ १४ ॥

---

I, 10, 29, 7. हन्ति न तस्मिन्दोष इति पुराणे [°ण M. U.] मन्युरेव मन्यु स्पृशति । M. U, Mr. U I, II. This transposition has been caused by Haradatta's explanation. The original position of the words probably was यो—हन्ति न— दोषो मन्यु°—स्पृशतीति पुराणे ॥ After this Sūtra Md. adds]:—

अध्यापनं कुलं आतं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ।
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्त जिघांसियाश्च तेन भ्रूणहा भवेद् ॥
गोब्राह्मणानां स्वशरीरहेतोरायाभिघातः शरणागतं च ।
स्त्रीणां च केशग्रहणे प्रवृत्ते विप्रेण शस्त्रग्रहणं प्रशस्तम् ॥

The first two lines are a rather faulty reproduction of Baudhāyana I, 18, 13 and the next four of Vāsishṭha III, 16-17. They have got into the text from the commentary, in which they are actually quoted.

I. 10, 29, 8. समवदा चरेयु° G[1], °युर्दम्यं° G U[3], सांदिश्येतर° N. U, P. pr. m, Md, G. U[4]; विवाहमानाः P. U, N. U., P., Mr. U. I. II.

I. 10, 29, 9 विप्रव्रजितास्मदे° G[1], विप्रव्रजिताः स्मदे° Md, ह्यस्मात्स्वार्यां P. pr. m., N, P. U, M U., Mr. U. I. pr. m, समत्यपत्स्यथेति Dev. Mss. and G. Md the Com shows संप्रत्यपपत्स्यते that Haradatta read संप्रत्यपत्स्यत as, he declares it to be equivalent to समपत्स्यत with an irregular insertion of प

I. 10, 29, 14. आतंच्य Md, आतंच्य G. U[3]; निवर्तते N, P. U., N. U.

अभीचारानुव्याहारावशुचिकरावपतनीयौ ॥ १५ ॥
पतनीयाविति हारीतः ॥ १६ ॥
पतनीयवृत्तिस्त्वशुचिकराणां द्वादश मासान्द्वादशार्धमासान्द्वादश द्वादशाहान्द्वादश सप्ताहान्द्वादश त्र्यहान्द्वादशाहँ सप्ताहं त्र्यहमेकाहम् ॥ १७ ॥
इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥ १८ ॥ २९ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने दशम पटलः समाप्तः ॥

१. ११. ३०

विद्यया स्नातीत्येके ॥ १ ॥
तथा व्रतेनाष्टाचत्वारिंशत्परीमाणेन ॥ २ ॥
विद्याव्रतेन चेत्येके ॥ ३ ॥
तेषु सर्वेषु स्नातकवद्वृत्तिः ॥ ४ ॥
समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥ ५ ॥
अथ स्नातकव्रतामि ॥ ६ ॥
पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥ ७ ॥
संध्योश्च वहिर्ग्रामादासनं वाग्यतश्च ॥ ८ ॥
विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥ ९ ॥
सर्वान्रागान्वासासि वर्जयेत् ॥ १० ॥

I 10, 29, 1> अभिचार° Md N, G[1], M U, text G, U[3] text but see the *Com*, अनुव्यवहाराव° P U, G U, अनुव्याहाव° G U[3]

I. 10, 29, 17 Md adds द्वादश द्व्यहान् after सप्ताहान्, the Devanāgarī Mss (except N) add द्व्यह after त्र्यह; G U[3] om द्वादश सप्ताहान् and सप्ताह —

I 10, 29, 18 निर्वेश P U, इति om Md, M U, joins Sūtras 17-18.

I 11, 30, 1 विद्या स्ना° M U

I 11, 30, 2 वृत्तना P U.; क्षिताना° G U[3] text °वर्षेप° P sec. m, °परिमाणेन N, Md, N U text, G, G U[1] text, but see the com

1 11, 30, 3 विद्यया P sec. m

I 11, 30, 4 स्नातकवृत्ति G U[3] text

I. 11, 30, 5 पूजायां च Md

I. 11, 30, 8 सन्ध्योश्च M. U text and Com वाग्यतस्य Md., G U[1] text

कृष्णं च स्वाभाविकम् ॥ ११ ॥

अनूद्भासि वासो वसीत ॥ १२ ॥

अप्रतिकृष्टं च शक्तिविषये ॥ १३ ॥

दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य॥१४॥

शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्याद्भूम्यां किंचिदन्तर्धाय ॥ १५ ॥

छायायां मूत्रपुरीषयोः कर्म वर्जयेत् ॥ १६ ॥

स्वां तु छायामवमेहेत् ॥ १७ ॥

न सोपानन्मूत्रपुरीषे कुर्यात्कृष्टे पथ्यप्सु च ॥ १८ ॥

तथा ष्ठेवनमैथुनयोः कर्माप्सु वर्जयेत् ॥ १९ ॥

अग्निमादित्यमपो ब्राह्मणं गा देवताश्चाभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत् ॥ २० ॥

अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥ २१ ॥

अग्निमपो ब्राह्मणं गा देवता द्वारं प्रतीवातं च शक्तिविषये नाभिप्रसारयीत ॥ २२ ॥

अथाप्युदाहरन्ति ॥ २३ ॥ ॥ ३० ॥

---

I. 11, 30, 11. कृष्णं वा N. U.

I. 11, 30, 12 अनुद्भासि Md. G[1], but see the Com

I. 11, 30, 13 अप्रतिकृष्णं N U., P. U. G[1].

I 11, 30, 17. च्छायाम् Grantha Mss., but see the Com

I. 11, 30, 19. ष्ठीवन° Dev. Mss., G U[1, 2] join Sûtras 18-19, the former adds षट् स्पर्शानि, the latter चत्वारि स्पर्शानि; G. U[3] joins Sutras 18-20 and adds चत्वारि स्पर्शानि and then the explanation of निष्ठेवनम् (read ष्ठेवनम्)

I. 11, 30, 20. गां Devanagarī MSS., except. M. U.

I. 11, 30, 21 शुन्धनं N. U., M. U., Mr. U. I, II, P., N.

I 11, 30, 22. अग्निमादित्यम° Md, G. U[3], गां N, P, Md., प्रतिवातं च N. U., Md, G U[1, 3] प्रतिवातं G U[3], प्रतिवातं P. U, N, P. I adopt the reading of M. U. and G[1], to which P. U., N, P. also point, because च indicates the co-ordination of the preceding word with अग्निमपो etc, and because अभिप्रसारयति may be used in the sense of "to stretch (the feet) towards" with the accusative alone.

## १. ११. ३१.

प्राङ्मुखोऽन्नानि भुञ्जीत उच्चरेद्दक्षिणामुखः ।
उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति ॥ १ ॥
आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥२॥
अस्तमिते च बहिर्ग्रामारादादावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् ॥ ३ ॥
देवताभिधानं चाप्रयतः ॥ ४ ॥
परुषं चोभयोर्देवतानाँ राज्ञश्च ॥ ५ ॥
ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ॥ ६ ॥
हस्तेन चाकारणात् ॥ ७ ॥
गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥ ८ ॥
स्तृहतीं च गां नाचक्षीत ॥ ९ ॥
सँसृष्टां च वत्सेनानिमित्ते ॥ १० ॥
नाधेनुमधेनुरिति ब्रूयात् । धेनुभव्येत्येव ब्रूयात् ॥ ११ ॥
न भद्रं भद्रमिति ब्रूयात् । पुण्यं प्रशास्तमित्येव ब्रूयात् ॥ १२ ॥
वत्सतन्तीं च नोपरि गच्छेत् ॥ १३ ॥

---

I 11, 31, 2 आरादात्र °Devanagiri Mss

I 11, 31, 3 After this Sutra Md. and N. U add, शिरःपरिवेष्टन प्रथमं निवीतं द्वितीयं दिशावलोकनं तृतीयमन्तर्धानं चतुर्थं मौन पञ्चमं पुरीषं षष्ठ सृतिकाग्रहण सप्तममुदकमष्टममेतदष्टकमित्याचक्षते [इत्येतदष्टकमित्या° N.U ] Though N U. adds स्पष्टार्थं, the passage must be an interpolation, taken probably from some commentary None of the other Mss. shows any trace of it

I 11, 31, 5 पुरुष G U[1 2] text, पुरुष G U[3]. text

I. 11, 31, 9. स्पृहतीं G U[1], G[2 3], स्पृहंतीं P sec m , स्तृहतीं Md, N, N. U, P U, M, U, Mr U. I, II.

I. 11, 31, 11 धेनुभंव्येति G. U[1], धेनुभव्येति G U[2 3], N. U , P, U Mr. U, I. II have two Sūtras, beginning the second with धेनुभव्येति, G U[1] joins अनिमित्ते with this Sutra

I. 11, 31, 12. प्रशास्त्यमि° G. U[1], text, N U ,G U[2 3] begin a new Sūtra with पुण्य

I 11,31,13 वत्सतन्त्री Md ; Md, as well as N. U., and P.U add यद्युपरि गच्छेद्म्रियमाणो भवति [अभीमान्भवति P. U.]

प्रेङ्खावन्तरेण च नातीयात् ॥ १४ ॥

नासौ मे सपत्न इति ब्रूयात् । यद्यसौ मे सपत्न इति ब्रूयाद् द्विषन्तं भ्रातृव्यं जनयेत् ॥ १५ ॥

नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥ १६ ॥

न पततः संचक्षीत ॥ १७ ॥

उद्यन्तमस्तं यन्तं चादित्यं दर्शने वर्जयेत् ॥ १८ ॥

दिवादित्यः सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्यायां निशायाँ स्वाधीय आत्मनो गुप्तिमिच्छेत्प्रायत्यब्रह्मचर्यकाले चर्यया च ॥ १९ ॥

सह ह्येतां रात्रिँ सूर्याचन्द्रमसौ वसतः ॥ २० ॥

न कुसृत्या ग्रामं प्रविशेत् । यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥ २१ ॥

नाब्राह्मणायोच्छिष्टं प्रयच्छेत् । यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥ २२ ॥

क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेत् ॥ २३ ॥ ३१ ॥

१. ११. ३२.

प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥ १ ॥

मिथुनीभूय च न तया सह सर्वां रात्रिँ शयीत ॥ २ ॥

शयानश्चाध्यापनं वर्जयेत् ॥ ३ ॥

---

I. 11, 31, 14 प्रेङ्खाव° M. U, N. U., G. U[2] Com ; प्रेंघाव° G. U[2] text; Md., P. U., N. U, M. U. add यथतीयावनायुष्यो भवति.

I. 11, 31, 16. Md., N. U. add मणिधनुरित्येव ब्रूयात्, a piece of the Com.

I. 11, 31, 17. पवित्रः Md; पतत: पततः P. U.,;पततं G. U[1].

I. 11, 31, 18. परिवर्जयेत् P. U.

I. 11, 31, 19. स्वाधीयः Md, स्वाद्धयि G. U[2] text; °ब्रह्मचर्याभ्यां P. note above the line.

I. 11, 31,21. G. U[1] begins a new Sūtra with यदि.

I. 11, 31, 22.स्कुप्त्वा, P. U, P. pr. m, Mr. U. I Com ; कुत्वा N.U.

I. 11, 32, 1. वर्षां शारदं N. U; वर्षासु शारदि, M U , Mr. U. pr. m , taken from the Com.

I. 11, 32, 2. रात्रीं G. U[1] text.

न च तस्याँ शय्यायामध्यापयेद्यस्याँ शयीत ॥ ४ ॥

अनाविःस्रगनुलेपणः स्यात् ॥ ५ ॥

सदा निशायां दारं प्रत्यलंकुर्वीत ॥ ६ ॥

सशिरा वमज्जनमप्सु वर्जयेत् ॥ ७ ॥

अस्तमिते च स्नानम् ॥ ८ ॥

पालाशमासनं पादुके दन्तप्रक्षालनमिति च वर्जयेत् ॥ ९ ॥

स्तुतिं च गुरोः समक्षं यथा सुस्नातमिति ॥ १० ॥

आ निशाया जागरणम् ॥ ११ ॥

अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः ॥ १२ ॥

मनसा वा स्वयम् ॥ १३ ॥

ऊर्ध्वमर्धरात्रादध्यापनम् ॥ १४ ॥

नापररात्रमुत्थायानध्याय इति संविशेत् ॥ १५ ॥

काममपशयीत ॥ १६ ॥

मनसा वाधीयीत ॥ १७ ॥

क्षुद्रान्क्षुद्राचरिताँश्च देशान्न सेवेत ॥ १८ ॥

सभाः समाजाँश्च ॥ १९ ॥

समाजं चेद्गच्छेत्प्रदक्षिणीकृत्यापेयात् ॥ २० ॥

नगरप्रवेशनानि च वर्जयेत् ॥ २१ ॥

---

I. 11, 32, 5. °अनुलेपनः or °न all Mss except G. U³, which has °अनुलेपण in the text and Com., see also the note in the Com.

I. 11, 32, 7. शरीरावम° G. U³ text.

I. 11, 32, 10. सुस्नात इति Devanāgarı Mss.; सुस्नातमिति G¹

I. 11, 32, 14 अध्ययनं P. pr. m. and the Dev. Mss of the Com.

I. 11, 32, 15. संवेशयेत् Md.

I. 11, 32, 16 काममुपशयीत Md, G. U³ P Mr. U pr. m; अपशयीत N. U, P. sec. m; अपानाशयीत N, P pr. m., अपाशयीत M. U., अपाश्रयः शयित P. U. pr. m, अपाशयः शासयीत P. U. sec m; अपश्रयीत G¹; but G. U¹ correctly, in accordance with the Com. अपशयीत, and Mr U. I. sec m. अप शयीत.

I. 11, 32, 21 च om. Md, N. U.

प्रश्नं च न विब्रूयात् ॥ २२ ॥

अथाप्युदाहरन्ति ॥ २३ ॥

मूलं तूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं हिनस्ति ।
धर्मप्रह्लाद न कुमालनाय रुदन्ह मृत्युर्व्युवाच प्रश्नमिति ॥ २४ ॥

गार्दभं यानमारोहणे विषमारोहणावरोहणानि च वर्जयेत् ॥ २५ ॥

बाहुभ्यां च नदीतरम् ॥ २६ ॥

नावां च सांशयिकीम् ॥ २७ ॥

तृणच्छेदनलोष्टविमर्दनाष्ठेवनानि चाकारणात् ॥ २८ ॥

यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते ॥ २९ ॥ ॥ ३२ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्न एकादशः पटलः समाप्तः ॥

॥ इति प्रथमः प्रश्नः समाप्तः ॥

---

I 11, 32, 24 वृहति G U[2], वृहती G U[1], वृहदि G[1], but see the Com, धर्मप्रमादन P U, धर्म्मप्रह्लादन all the other Mss, except Md and Mr U II, G U[1] Com धर्म्मप्रह्लाद, but see the Com.

I 11 32, 25 °वरोहणानिति च P, विषमावरोहावरोह° P U, विषमारोहणानि G U[2] text, विषत्क्रमारोह° G, U[2] text, गर्दभ G U[1 2]

I 11, 32 26 नदीतरणम् P, U, M U, Mr U I, II P, N, G U[1 2], but see the com

I 11, 32 27 नाव Devanāgarı Mss of the Com. and G U[2], P, Md, G[1] Haradatta prefers this reading but नावा is a Vedic and Prākrt form instead of नौ —
After this Sutra Md inserts वसुद्वार यस्यैव क्रिमिरुत्पद्यतेथापर वास सुवर्णं च दत्त्वा पञ्चगव्येन स्नात्वा च पीत्वा च कृच्छ्रेण शुध्यत इति N U भरद्वारे तु तस्यैव कृमिरुत्पद्येत वर वास सुवर्णं दत्वा कृच्छ्रेण शुध्यत इति and G[1] भरद्वाजे तु रस्यैव कृमिरुत्पद्येत तथा वर वास सुवर्णं च दत्त्वा पञ्चगव्येन स्नात्वा च पीत्वा च कृच्छ्रेण शुध्यतीति

I 11, 32, 28 °ष्ठीवनानि Devanāgarı Mss

I 11, 32, 29 After this Sutra G[1] and P give the Pratıkas of the Khandas, beginning with the last and going backwards, as is usual in the Mss. of the Southern schools N gives the Pratıkas of the Patalas, beginning with the first and adds एकादश ॥ ११ ॥

## २. १. १.

पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥ १ ॥
कालयोर्भोजनम् ॥ २ ॥
अतृप्तिश्चान्नस्य ॥ ३ ॥
पर्वसु चोभयोरुपवासः ॥ ४ ॥
औपवस्तमेव कालान्तरे भोजनम् ॥ ५ ॥
तृप्तिश्चान्नस्य ॥ ६ ॥
यच्चैनयोः प्रियँ स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥ ७ ॥
अधश्च शयीयाताम् ॥ ८ ॥
मैथुनवर्जनं च ॥ ९ ॥
श्वोभूते स्थालीपाकः ॥ १० ॥
तस्योपचारः पार्वणेन व्याख्यातः ॥ ११ ॥
नित्यं लोक उपदिशन्ति ॥ १२ ॥
यत्र क्व चाग्निमुपसमाधास्यन्स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो लेखा लिखित्वाद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥ १३ ॥
उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वान्यदुपदध्यात् ॥ १४ ॥
नित्यमुदधानान्यद्भिररिक्तानि स्युर्गृहमेधिनोर्व्रतम् ॥ १५ ॥
अहन्यसंवेशनम् ॥ १६ ॥
ऋतौ च संनिपातो दारेणानुव्रतम् ॥ १७ ॥
अन्तरालेऽपि दार एव ॥ १८ ॥
ब्राह्मणवचनाच्च संवेशनम् ॥ १९ ॥
स्त्रीवाससैव संनिपातः स्यात् ॥ २० ॥

---

II 1, 1, 1. गृहमेधिनोव्रत G[1,2] G.U,[1,2] but see the Com ; Md om Sūtras 1-8 down to यातान्.

II. 1, 1, 5. औपवस्त्यम् G U[1,3], औपवस्त्रम् M. U.

II. 1, 1, 8. °शय्याता G[1], शय्यातान् G[2] G. U[1], शयीतां G U[2,3].

II. 1, 1, 13 ततः प्राचीः Md

II 1, 1, 14 उत्सृज्यैत° G[2], P U, M U. om the Com, on this Sutra.

II 1, 1, 17. ऋतौ च संनिपाते चतुर्थीप्रभृत्या षोडशीमुत्तरामुत्तरां युग्मास्वेमीतका-न्यजानिश्रेयसमृतुगमनमित्युपदिशन्ति दारेणानु व्रतम् Md, mixing Gṛhya Sūtra IX, 1, which is quoted in the Com., with the text.

II. 1, 1, 18. अन्तराळे Grantha Mss.

II. 1, 1, 20 सह संनिपातस्यात् G. U[1].

यावत्संनिपातं चैव सहशय्या ॥ २१ ॥

ततो नाना ॥ २२ ॥

उदकोपस्पर्शनम् ॥ २३ ॥ १ ॥

२. १. २.

अपि वा लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् ॥ १ ॥

सर्ववर्णानाँ स्वधर्मानुष्ठाने परमपरिमितँ सुखम् ॥ २ ॥

ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते । तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ॥ ३ ॥

यथौपधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेवम् ॥ ४ ॥

एतेन दोषफलपरिवृद्धिरुक्ता ॥ ५ ॥

स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोके परिमिते निरये वृत्ते जायते चाण्डालो ब्राह्मणः पौल्कसो राजन्यो वैणो वैश्यः ॥ ६ ॥

एतेनान्ये दोषफलैः कर्मभिः परिध्वँस्ता दोषफलासु योनिषु जायन्ते वर्णपरिध्वँसायाम् ॥ ७ ॥

यथा चाण्डालोपस्पर्शने संभाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥ ८ ॥

---

II 1, 2, 2 °परिमितसुखं P, G. U[1 2 3], परमप° P U.

II 1, 2, 4 G U[1] joins Sūtras 4 5, °विशेष Md

II 1, 2, 5 एतेनैव, °फलवृ° G[1].

II 1, 2, 6 निरये P, P.U, N U, Mr. U; विशेषे M, U, राजन्यो om G[1] वैणो om md.

II. 1, 2, 7 अन्यो Md, कर्मफलैः कर्मभिः G[1], परिध्वस्तो Md, परिध्वस्ता P, U. text G[3], परिद्रुता G U.[3], परिध्वंसा —वर्णे om N; °फलास्वयोनि° G[1]

II 1, 2, 8. G U[1] connects यथा with the preceding Sutra, G. U[2 3] omit it altogether, चण्डालो° G[1], G, U[3].

अवगाहनमुपस्पर्शने संभाषायां ब्राह्मणसंभाषा दर्शने ज्योतिषां दर्शनम् ॥ ९ ॥ २ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने प्रथमः पटलः समाप्तः ॥

२. २. ३.

आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः स्युः ॥ १ ॥
भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥ २ ॥
केशानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥ ३ ॥
आर्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युः ॥ ४ ॥
तेषां स एवाचमनकल्पः ॥ ५ ॥
अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥ ६ ॥
उदकोपस्पर्शनं च सह वाससा ॥ ७ ॥
अपि वाष्टमीष्वेव पर्वसु वा वपेरन् ॥ ८ ॥
परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत् । तद्देवपवित्रमित्याचक्षते ॥ ९ ॥
सिद्धेऽन्ने तिष्ठन्भूतमिति स्वामिने प्रब्रूयात् ॥ १० ॥
तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः ॥ ११ ॥
गृहमेधिनोर्यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ॥ १२ ॥

---

II 2 3 1 वैश्वदेवास° G¹, G¹ om all from स्यु to शूद्रा Sutra 4

II 2, 3 2 क्षवथुमि° G U¹ ²

II 2, 3 6 लोम om P U

II 2, 3 7 वाससां G¹, G U².

II 2 3 9 संस्कृतमन्न Md, संस्कृतम् om G U², °मन्नसंस्कृ° G²

II 2 3, 10, तिष्ठे तिष्ठन् भूयात् G U² text Md has lost fol. 18, which contained this and the following Sūtras down to II 2 5 6

II 2 3 11 प्रतिवचन P U, M U, M U, Mr U II, G U², but see the Com.

II, 2, 3, 12 गृहमेधिनो P N, G¹, G², N U, G U¹ ² ³, but see above II 1, 1, 1 and II, 1, 1, 14.

तेषां मन्त्राणामुपयोगे द्वादशाहमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥ १३ ॥
उत्तमस्यैकरात्रमुपवासः ॥ १४ ॥
बलीनां तस्य तस्य देशे सँस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥ १५ ॥
औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रँ हस्तेन जुहुयात् ॥ १६ ॥
उभयतः परिषेचनं यथा पुरस्तात् ॥ १७ ॥
एवं बलीनां देशे देशे समवेतानाँ सकृत्सकृदन्ते परिषेचनम् ॥१८॥
सति सूपसँसृष्टेन कार्याः ॥ १९ ॥
अपरेणाग्निँ सप्तमाष्टमाभ्यामुदगपवर्गम् ॥ २० ॥
उदधानसंनिधौ नवमेन ॥ २१ ॥
मध्येगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥ २२ ॥
उत्तरपूर्वदेशेगारस्योत्तरैश्चतुर्भिः ॥ २३ ॥ ३ ॥

२. २. ४.

शय्यादेशे कामलिङ्गेन ॥ १ ॥
देहल्यामन्तरिक्षलिङ्गेन ॥ २ ॥
उत्तरेणापिधान्याम् ॥ ३ ॥
उत्तरैर्ब्रह्मसदने ॥ ४ ॥
दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥ ५ ॥
रौद्र उत्तरो यथा देवताभ्यः ॥ ६ ॥
तयोर्नाना परिषेचनं धर्मभेदात् ॥ ७ ॥

---

II. 2, 4, 2 देहिल्याम° G.U[1,2], देहल्याम° G[1], G[3], G. U[1]. P. U.; M. U., Mr. U. II join Sûtras 1 and 2.

II. 2. 4, 5. G. U[1] begin a new Sûtra with पितृ°.—
II. 2, 4, 6. रौद्रमु° G.U[1]; रौद्रमुत्तरो G[1]

नक्तमेवोत्तमेन वैहायसम् ॥ ८ ॥

य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥ ९ ॥

अग्रं च देयम् ॥ १० ॥

अतिथीनेवाग्रे भोजयेत् ॥ ११ ॥

बालान्वृद्धान्रोगसंबन्धान्स्त्रीश्चान्तर्वत्नीः ॥ १२ ॥

काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयानाम् ॥ १३ ॥

अभावे भूमिरुदकं तृणानि कल्याणी वागिति ।
एतानि वै सतोगारे न क्षीयन्ते कदाचनेति ॥ १४ ॥

एवंवृत्तावनन्तलोकौ भवतः ॥ १५ ॥

ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयम् । न प्रत्युत्तिष्ठेत् ॥ १६ ॥

अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत् ॥ १७ ॥

राजन्यवैश्यौ च ॥ १८ ॥

शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् । अथास्मै दद्यात् ॥ १९ ॥

दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः ॥ २० ॥

नित्यमुत्तरं वासः कार्यम् ॥ २१ ॥

अपि वा सूत्रमेवोपवीतार्थे ॥ २२ ॥

यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान्संकृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेत् । एवं वास्तु शिवं भवति ॥ २३ ॥

---

II 2 4 12 रागसंबद्धान् P P U N U

II 2 4 14 The metre requires the Vedic neuter plural तृणा

II 2 4 17 एव om M U text, P U text G U¹om the whole first clause

II 2 4 23 लेपान्सं° N लेपांस P, लेपा न्स° N U G U²

ब्राह्मण आचार्यः स्मर्यते तु ॥ २४ ॥

आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम् ॥ २५ ॥

अनुगमनं च पश्चात् ॥ २६ ॥

तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात् ॥ २७ ॥ ४ ॥

२. २. ५.

सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदहः ॥ १ ॥

अधीत्य चाविप्रक्रमणं सद्यः ॥ २ ॥

यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेत् । एवमुभयोः शिवं भवति ॥ ३ ॥

समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसंगृह्य न बीभत्समान उदकमुपस्पृशेत्पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत् ॥ ४ ॥

आसने शयने भक्ष्ये भोज्ये वाससि वा संनिहिते निहीनतरवृत्तिः स्यात् ॥ ५ ॥

तिष्ठन्सव्येन पाणिनानुगृह्याचार्यमाचमयेत् ॥ ६ ॥

अन्यं वा समुदेतम् ॥ ७ ॥

स्थानासनचङ्क्रमणस्मितेष्वनुचिकीर्षन् ॥ ८ ॥

संनिहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठेवनदन्तस्कवननिःशृङ्खणभ्रुक्षेपणतालननिष्टयानीति ॥ ९ ॥

---

II 2, 5 2 वाति॰ P. U., N U, Mr U II. According to Haradatta the usual reading was अविप्रक्रमिणम् which the Mss. do not give

II. 2, 5, 4 पुरस्कृत्यचेर॰ G. U[1].

II. 2, 5, 5 भोज्य om P U M U, वाससी G[1 2]

II 2 5, 6 आचामयेत् N. U, Md

II. 2, 5, 8 स्थितेष्व॰ P. sec. m., N, G U[1].

II 2, 5, 9 मूत्रपुरीषयो Md, 'ष्ठीवन' Devanāgarī Mss and Md, निःशृङ्खण, P, P U., M. U, Md., and Grantha Mss, शृङ्खण G U[1], भ्रुविक्षेपण Md, भ्रूक्षेपण P, P, U sec m, G[1 2], G. U[1], but see the Com ताडन Md., N, ताडन G U[2]; निष्टानीति G. U[1 2], G[1] निष्ठानीति G[2]

दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत् ॥ १० ॥

वाक्येन वाक्यस्य प्रतीघातमाचार्यस्य वर्जयेत् ॥ ११ ॥

श्रेयसां च ॥ १२ ॥

सर्वभूतपरीवादाक्रोशाँश्च ॥ १३ ॥

विद्यया च विद्यानाम् ॥ १४ ॥

यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥ १५ ॥

उपाकरणाद्वोत्सर्जनादध्यापयितुर्नियमः । लोमसँहारणं माँसँ श्राद्धं मैथुनमिति च वर्जयेत् ॥ १६ ॥

ऋत्वे वा जायाम् ॥ १७ ॥

यथागमँ शिष्येभ्यो विद्यासंप्रदाने नियमेषु च युक्तः स्यात् । एवं वर्तमानः पूर्वापरान्संबन्धानात्मानं च क्षेमे युनक्ति ॥ १८ ॥

मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्शिश्नोदरारम्भणानास्रावान्परिघृञ्जानोऽमृतत्वाय कल्पते ॥ १९ ॥ ५ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने द्वितीयः पटलः समाप्तः ॥

२. ३. ६.

जात्याचारसँशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत् ॥ १ ॥

---

II. 2. 5, 11. प्रतिघातम् P,N, N. U. M U., Mr. U, G. U[2,3] G[1,2] are doubtful, P.U., M.M.U join Sûtras 11–12.

II. 2, 5, 13 परिवाद्° P, N, N. U., M. U., Mr. U., G. U[3]., G[1].

II. 2, 5, 16. °संहरणं N., M. U., Mr. U. संहरणं P. U., text and Com, °धारणं G. U.[1], text, °हरणं G U[3] Com.; °हारिण° G[1].

II.2,5,17. उपेयात् add The Dev. Mss. except N., but see S'rauta Sutra VIII. 4. 6 where the verb is likewise omitted It is added only in the first passage, S'r. Sû III. 17,18.

II. 2, 5, 18 यथागमन Md, एवं युक्तो च° G. U[2], एवं युक्तो च° G.U[1], पूर्वापरान्स° P. N., N. U.

II. 2, 5, 19. प्राणेन Devanâgari Mss except P. sec. m. and N. U; आस्रावान्, P. pr. m., Md, P. U. M. U., Mr. U.

साधुतां चेत्प्रतिजानीतेतिनिरुपद्रष्टा वायुरुपश्रोतादित्योनुख्याता साधुतां प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥ २ ॥

अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥ ३ ॥

धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति ॥ ४ ॥

स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोतिथिर्भवति ॥ ५ ॥

तस्य पूजायां शान्तिः स्वर्गश्च ॥ ६ ॥

तमभिमुखोभ्यागम्य यथावयः समेत्य तस्यासनमाहारयेत् ॥ ७ ॥

शक्तिविषये नाबहुपादमासनं भवतीत्येके ॥ ८ ॥

तस्य पादौ प्रक्षालयेत् । शूद्रमिथुनावित्येके ॥ ९ ॥

अन्यतरोभिषेचने स्यात् ॥ १० ॥

तस्योदकमाहारयेन्मृन्मयेनेत्येके ॥ ११ ॥

नोदकमाचारयेदसमावृत्तः ॥ १२ ॥

अध्ययनसांवृत्तिश्चात्राधिका ॥ १३ ॥

सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवरार्घ्येनेति ॥ १४ ॥

आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति ॥ १५ ॥

---

II. 3, 6, 2 साधुतां प्रतिजानते Md, N U, G U[1], वितथ Md, N U, G U[2], विथतथ G[1]

II. 3, 6, 5 °सयुक्त P U., M U, Mr U, स्वधर्मे युक्त G[1].

II. 3, 6, 6. तुष्टिं धार्मिक G[2]

II. 3, 6 7 आहरयत् P pr m. तद्भि° G U[2] P U, M U.

II. 3, 6, 11 आहरयेत् P pr.m., आहरेत् P U.

II. 3 6, 12 आहरयत् P pr m, P U, M U, समावृत्ते N, समावृत्ते N U.

II. 3, 6 13. अध्ययनात्सांवृत्तिः N U, G U[2], अध्यापनासांधिधि (वृत्ति sec. m.) अधिक° Md, अध्ययनासांवृत्ति P. sec. m, G[1 2] G U[1 2]

II. 3 6, 15 उपरिशय्यापा Md, उपरि शय्यामु° N, अभ्यञ्जने च P

अप्रसँस्कर्तारमाहूय व्रीहीन्यवान्वा तदर्थान्निर्वपेत् ॥ १६ ॥
उद्धृतान्यन्नान्यवेक्षेतेदं भूया३ इदा३ मिति ॥ १७ ॥
भूय उद्धरेत्येव ब्रूयात् ॥ १८ ॥
द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमाँसमानस्य मीमाँसितस्य वा ॥ १९ ॥
पाप्मानँ हि स तस्य भक्षयतीति विज्ञायते ॥ २० ॥ ६ ॥

२. ३. ७.

स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः ॥ १ ॥
योतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यते सोन्वाहार्यपचनः ॥ २ ॥
ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥ ३ ॥
पयउपसेचनमन्नमग्निष्टोमसंमितँ सर्पिरोक्थ्यसंमितं मधुनातिरात्रसंमितं मांसेन द्वादशाहसंमितमुदकेन प्रजावृद्धिरायुष्यश्च ॥४॥
प्रिया अप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते ॥ ५ ॥
स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति ॥ ६ ॥
यदनुतिष्ठत्युदवस्यत्येव तत् ॥ ७ ॥

---

II 3, 6, 17 अवेक्षते P. U, G U[1 2], भूया इदामिति Md, G[3], G U[1 2 3] इदमिति G[1]

II 3, 6, 19 P U, M U, Mr U join Sutras 19–20

II 3, 7, 1 कुटुम्बिनो G[3], G U[3 2, 3] text and Com.

II. 3, 7, 2. कुटुबे G[1 2] G U[1 2] text and Com, G U[3] text

II 3 7, 5. प्रियाप्रियाश्च G[1], G U[3] प्रियाः प्रि° G[3], प्रिया अभिप्रिया° P U., text and Com, प्रिया अपिप्रिया° G U[1]

II, 3, 7, 7 अनुतिष्ठति P pr m N, U, M U, this is the reading explained by *Haradatta, but* declared to be the less common one, अनुचिष्टति P U

यत्सान्त्वयति सा दक्षिणा प्रशँसा ॥ ८ ॥

यत्सँसाधयति ते विष्णुक्रमाः ॥ ९ ॥

यदुपावर्तते सोवभृथः ॥ १० ॥

इति हि ब्राह्मणम् ॥ ११ ॥

राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत् ॥ १२ ॥

आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्य क्वावात्सीरिति । व्रात्य उदकमिति । व्रात्य तर्पयँस्त्विवति ॥ १३ ॥

पुराग्निहोत्रस्य होमादुपाँशु जपेत् । व्रात्य यथा ते मनस्तथास्त्विति । व्रात्य यथा ते वशस्तथास्त्विति । व्रात्य यथा ते प्रियं तथास्त्विति । व्रात्य यथा ते निकामस्तथास्त्विति ॥ १४ ॥

यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् व्रात्य अतिसृज होष्यामि । इत्यतिसृष्टेन होतव्यम् । अनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह ॥ १५ ॥

एकरात्रं चेदतिथीन्वासयेत्पार्थिवाँल्लोकानभिजयति द्वितीययान्तरिक्ष्याँस्तृतीयया दिव्याँश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति विज्ञायते ॥ १६ ॥

---

II. 3, 7, 8 Thus Haradatta. It is possible to read दक्षिणाप्रशंसा. But the combination is not good, as a mention of the important *Dakshina*, not of the less important *Dakshina-prasamsa*, is to be expected.

II. 3, 7, 10 यदुपाव° G. U[1, 2] text and Com.

II. 3, 7, 11 इति मा° all except G[1] G[2].

II. 3, 7, 13 तर्पयस्त्विति P; तर्पयन्त्विति G. U[2] text pr. m. The reading तर्पयन्त्विति, which is found Ath. V. XV, II, 2, the passage referred to by Âpastamba, is no doubt the original and correct one. But the corruption is ancient and probably goes back to Âpastamba's times, and the Hairanyakesas have it likewise.

असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यात् । एवमस्य समृद्धं भवति ॥ १७ ॥ ७॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीय प्रश्ने तृतीयः पटलः समाप्तः ॥

२. ४, ८.

येन कृतावसथः स्यादतिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥ १ ॥

शेषभोज्यतिथीनाँ स्यात् ॥ २ ॥

न रसान्गृहे भुञ्जीतानवशेषमतिथिभ्यः ॥ ३ ॥

नात्मार्थमभिरूपमन्नं पाचयेत् ॥ ४ ॥

गोमधुपर्कार्हो वेदाध्यायः ॥ ५ ॥

आचार्य ऋत्विक् स्नातको राजा वा धर्मयुक्तः ॥ ६ ॥

आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥ ७ ॥

दधि मधुसँसृष्टं मधुपर्कः पयो वा मधुसँसृष्टम् ॥ ८ ॥

अभाव उदकम् ॥ ९ ॥

षडङ्गो वेदः ॥ १० ॥

छन्दः कल्पो व्याकरणं ज्योतिषं निरुक्तं शिक्षा छन्दोविचितिरिति ॥ ११ ॥

शब्दार्थारम्भणानां तु कर्मणाँ समाम्नायसमाप्तौ वेदशब्दः । तत्र संख्या विप्रतिषिद्धा ॥ १२ ॥

---

II. 3,7,17, असमुदित Md; अतिथिर्नुवाण Md, N U, M U, G[1], G U[1 2 3]

II. 4, 8, 2 शेषभोजी P, P. U, Mr U,

II. 4, 8, 11 ज्योतिष P. U, N, शिक्षा P, P U, M. U, Mr U, but see the Com.

II 4 8, 12 समासो G[1], G U[1 2].

अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः ॥ १३ ॥
अतिथिं निराकृत्य यत्रगते भोजने स्मरेत्ततो विरम्योपोष्य ॥ १४ ॥
॥ ८ ॥

## २. ४. ९.

श्वोभूते यथामनसं तर्पयित्वा संसाधयेत् ॥ १ ॥
यानवन्तमा यानात् ॥ २ ॥
यावन्नानुजानीयादितरः ॥ ३ ॥
अप्रतीभायाँ सीम्नो निवर्तेत ॥ ४ ॥
सर्वान्वैश्वदेवे भागिनः कुर्वीता श्वाचाण्डालेभ्यः ॥ ५ ॥
नानर्हद्भ्यो दद्यादित्येके ॥ ६ ॥
उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ॥ ७ ॥
सर्वाण्युदकपूर्वाणि दानानि ॥ ८ ॥
यथाश्रुति विहारे ॥ ९ ॥
ये नित्या भाक्तिकास्तेषामनुपरोधेन संविभागो विहितः ॥ १० ॥
काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् ॥ ११ ॥
तथा चात्मनोनुपरोधं कुर्याद्यथा कर्मस्वसमर्थः स्यात् ॥ १२ ॥
अथाप्युदाहरन्ति ।
अष्टौ ग्रासा मुनेर्भक्षः षोडशारण्यवासिनः ।
द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥

II 4 9 2 P U om this Sutra and its Com

II 4 9, 4 अप्रतिभायां N, P U, Mr U, अप्रतिहायां N U but see the Com. निवर्तेत Md

II. 4, 9 5 चण्डालेभ्य N Md, G[1,2] G U[2] Com G U[1] om the text of Sutras 5-6

II 4 9, 7 च वर्जयेत् N U

II 4 9, 10 नित्यभाक्तिका° P, P. U, M U, नित्या भक्तिका N, N U text Mr U

II 4, 9, 11 वोपर° P U, P pr m

II. 4 9 12 कर्मसु समर्थं Md, N, G[1,2] G U[1,2] text, कर्मसमर्थं G U[3] text

II 4 9, 13 मस्या N, P, G[1,2], G U[1,3]

आहिताग्निरनड्वाँश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषाँ सिद्धिरनश्नतामिति ॥ १३ ॥ ९ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीय प्रश्ने चतुर्थः पटलः समाप्तः ॥

२. ५. १०.

भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमविलोपः ॥ १ ॥

तत्र गुणान्समीक्ष्य यथाशक्ति देयम् ॥ २ ॥

इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तम् । न तदाद्रियेत ॥ ३ ॥

स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यँ शिलोञ्छः ॥ ४ ॥

अन्यथापरिगृहीतम् ॥ ५ ॥

एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि ॥ ६ ॥

क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवाणिज्याधिकम् ॥ ७ ॥

नाननूचानमृत्विजं वृणीते न पणमानम् ॥ ८ ॥

अयाज्योऽनधीयानः ॥ ९ ॥

युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् ॥ १० ॥ .

---

P. U., M. U, Md, द्वाविंशत्तु गृहस्थास्यामितं Md.—After these two verses, Md, M. U, Mr U, N. U. add a third, गृहस्थेः ब्रह्मचारी वा योनश्नँस्तपश्चरेत् । प्राणाग्निहोत्रलोपेनावकीर्णी भवेत्तु सः ॥ It follows after the इति which marks the end of the quotation, and is not noticed in the Com.

II. 5, 10 1. शुश्रूषा Md., N., P., G.[2], P. U., G. U[1'2], but see the Com; यज्ञो om. N. U., विवाहो om. P. U. नियमलोप N. U.

II.5,10,4. प्रदानं P.U., M.U, शिलोञ्छन-मन्यथापरिगृहीतम् G. U[2]; शिलोञ्छः G[1'2], C. U[1].

II. 5, 10, 7. गोरक्षम् N., Md., G[1'2]. G. U[1'2]., P. U. text but see the Com

न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङ्गावृत्तानामार्या वधं परिचक्षते ॥ ११ ॥

शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानाँ शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ॥ १२ ॥

तस्य चेच्छास्त्रमतिप्रवर्तेरन्राजानं गमयेत् ॥ १३ ॥

राजा पुरोहितं धर्मार्थकुशलम् ॥ १४ ॥

स ब्राह्मणान्नियुञ्ज्यात् ॥ १५ ॥

बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥ १६ ॥ १० ॥

## २. ५. ११.

इतरेषां वर्णानामा प्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥ १ ॥

न च संदेहे दण्डं कुर्यात् ॥ २ ॥

सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥ ३ ॥

एवंवृत्तो राजोभौ लोकावभिजयति ॥ ४ ॥

राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ ५ ॥

समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ६ ॥

यानस्य भाराभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥ ७ ॥

वर्णज्यायसां चेतरैर्वर्णैः ॥ ८ ॥

---

II. 5, 10, 11 न्यस्तायुध. प्रकीर्णकेश प्राञ्जलिः N. U, Mr U, न्यस्तायुधप्रकीर्णकेशः C.U[1].; न्यस्तायुध प्रकीर्णकेशः G U[1], न्यस्तायुधप्रकीर्णकेश G. U[2], see also the Com

II. 5, 10, 12 निर्वेषं P. pr. m N, P. U, M. U, Mr. U, शास्त्रैरधिकृतानां G U[1].

II. 5, 10, 13 अतिवर्तेरन् N, U, P. U, अतिप्रवृत्तेरन् G[1], G U[1], इतिप्रवृत्तेरन् G[2], G U[1, 2], begin a new Sūtra with राजानं.

II 5, 10, 14. धर्मकुशलं P. U., M U.; पुरोहितं om P. pr. m

II 5, 10, 16. अवरोपयेत् P. U., M. U.

II 5,11,3 विचिन्त्य Md., दैवप्र° Grantha Mss and Md., but see the Com.

II. 5, 11, 7. धातुरस्य G. U[1].

अशिष्टपतितमत्तोन्मत्तामामाहमः स्त्ययनार्थेन सर्वैरेव दातव्यः॥९॥

धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥ १० ॥

अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ ११ ॥

धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत ॥ १२ ॥

अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥ १३ ॥

आधाने हि सती कर्मभिः संबध्यते येषामेतदङ्गम् ॥ १४ ॥

सगोत्राय दुहितरं न प्रयच्छेत् ॥ १५ ॥

मातुश्च योनिसंबन्धेभ्यः ॥ १६ ॥

ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजासहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य ॥ १७ ॥

आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥ १७ ॥

दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥ १९ ॥

मिथः कामात्सांवर्तेते स गान्धर्वः ॥ २० ॥ ११ ॥

## २. ५, १२.

शक्तिविषयेण द्रव्याणि दत्वा वहेरन्स आसुरः ॥ १ ॥

---

II 5, 11, 9 °मत्त° om G. U[2]

II. 5, 11, 14 सति N, G[2]. P. U., G U[1,2] but see the Com., संपत्त पूर्णां G U[2].

II. 5, 11, 17. बन्धुशीललक्षणसंपन्नप्रजारोग्याणि G. U[3], प्रजाँ सहत्व° P.U.,M. U.Mr. U. This reading is explained by Haradatta as the better one but in the Com, on the Gṛhya Sutra he prefers that given in the text, शक्तिविषये देहा Md.

II 5, 11, 19 Md inserts after this Sūtra सह धर्मं चरत इति प्राजापत्ये, taken from Āsvalayana Gṛhya Sutra 1. 6 1. which is quoted in the Com on Sūtra II, 5, 12. 2.

II, 5. 11, 20, संवर्तेते P. U text, Md., G U[1], सवर्तेते G. U[2], सांवर्तयते G. U[1] text, see the Com

II, 5, 12, 1. शक्तिविषये P. U., Md., G[3], G.U[3].

दुहितृमतः प्रोथयित्वा वहेरन्स राक्षसः ॥ २ ॥

तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान् ॥ ३ ॥

यथा युक्तो विवाहस्तथा युक्ता प्रजा भवति ॥ ४ ॥

पाणिसमृदं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत् ॥ ५ ॥

अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् ॥ ६ ॥

ब्राह्मणांश्च ॥ ७ ॥

अनुज्ञाप्य वातिक्रामेत् ॥ ८ ॥

अग्निमपश्च न युगपद्धारयीत ॥ ९ ॥

नानाग्नीनां च संनिवापं वर्जयेत् ॥ १० ॥

प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात् ॥ ११ ॥

पृष्ठतश्चात्मनः पाणी न संश्लेषयेत् ॥ १२ ॥

स्वपन्नभिनिर्मुक्तो नाश्वान्वाग्यतो रात्रिमासीत । श्वोभूत उदकमुपस्पृश्य वाचं विसृजेत् ॥ १३ ॥

स्वपन्नभ्युदितो नाश्वान्वाग्यतोऽहस्तिष्ठेत् ॥ १४ ॥

आ तमितोः प्राणमायच्छेदित्येके ॥ १५ ॥

स्वप्नं वा पापकं दृष्ट्वा ॥ १६ ॥

---

II 5 12 2 Md G[1] insert after this Sutra सुप्तानां प्रमत्तानां वा वहेरन्स पैशाच । which words have been likewise taken from Āśvalāyana and are quoted in the Com.

II 5 12 4 युक्ता प्रजा भवन्ति P U, G[1]. After this Sutra Md, G[1],G[2] Mr U, and N U insert मान्येन ह्यातस्य होमे तु तस्य संबन्ध [होमेन तु म° N U] अनुद्राहिता तु या कन्या तेवन युज्यते सा यूपकी । यान्यपूर्वानुद्दहत [पूर्वांद्दहत G[1] ] सा पुनर्भूः ॥ These Sutras are not noticed in the Com and without doubt interpolation.

II. 5, 12, 6, नातिक्रमेत् P, P U, M U, G[1]

II. 5, 12, 7 N U joins Sutras 7-8, M U om Sutra 7, G U[2 3] om the Com. on Sutras 7-9

II, 5, 12, 8 वातिक्रमेत P, P U G[1] वातिक्रमेद् G[3], M, U

II 5, 12, 9 धारयेत् M U

II. 5 12, 10 संनिपात G[3],

II 5 12, 13 अभिनिमुक्तो P pr m, N, pr m, U, अभिनिर्मुक्तो P U, text, N U, M U, G U[3], अभिनिमृक्तो G U[2], P U

अर्थं वा सिपाधयिषन् ॥ १७ ॥

नियमातिक्रमे चान्यस्मिन् ॥ १८ ॥

दोषफलसँशये न तत्कर्तव्यम् ॥ १९ ॥

एवमध्यायानध्याये ॥ २० ॥

न सँशये प्रत्यक्षवद् ब्रूयात् ॥ २१ ॥

अभिनिम्रुक्ताभ्युदितकुनखिश्यावदाग्रदिधिषुदिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान्गरीयान् ॥ २२ ॥

तत्र लिङ्गं चरित्वोद्धार्यमित्येके ॥ २३ ॥ १२ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने पञ्चमः पटलः समाप्तः ॥

२. ६. १३.

सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः संबन्धः ॥ १ ॥

दायेनाव्यतिक्रमश्चोभयोः २ ॥

पूर्ववत्यामसँस्कृतायां वर्णान्तरे च मैथुने दोषः ॥ ३ ॥

तत्रापि दोषवान्पुत्र एव ॥ ४ ॥

उत्पादयितुः पुत्र इति हि ब्राह्मणम् ॥ ५ ॥

---

II 5, 12, 17. सिसाधयिषन् Grantha Mss and Md, सिसाधयिष्य P sec m, शिषाधयिषन् N, सिसाधयिषु Dev Mss of Com and P pr m

II 5, 12, 18 चान्यस्मिन् N, P, Md P U, N. U

II 5, 12, 22 अभिनिर्मुक्त N. U, P U, M. U, °मृक्त G U², °मुक्त G U³, कुनखी P, N, Md, G¹, N U G U¹, श्यावदद्° Md, G¹ P sec m N U, अग्रेदिधिषु P U, N U, दिधिषु om G U³, पर्याधातृपर्याहित परिवृष्टपरीष्ट P. U, M U, Mr U निर्वेशो P. U, N U M U Mr U compare Āp S'r Su IX, 12 11

II 5, 12 23 एके om Md, G U³ has a lacuna, extending from the latter portion of the Com on Sutra 22 to the first half of the Com on II 6 13, 5 The piece has, however, been, inserted after II 6 13, 7.

अथाप्युदाहरन्ति ।

इदानीमेवाहं जनक स्त्रीणामीर्ष्यामि नो पुरा ।

यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् ॥

रेतोधाः पुत्रं नयति परेत्य यमसादने ।

तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः ॥

अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः ।

जनयितुः पुत्रो भवति सांपराये मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ ६ ॥

दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् ॥ ७ ॥

तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ ८ ॥

तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः ॥ ९ ॥

दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥ १० ॥

विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद् दुहितृमतेधिरथं शतं देयं तन्मिथुया कुर्यादिति । तस्यां क्रयशब्दः संस्तुतिमात्रम् । धर्माद्धि संबन्धः ॥ ११ ॥

एकधनेन ज्येष्ठं तोषयित्वा ॥ १२ ॥ १३ ॥

---

II 6 13, 6 (a) जनक Dev Mss (except N) and Md so also Haradatta who misunderstood the reading of the Grantha Mss, which may stand for जनक or जनक The correct explanation is given by Govindasvâmin on Baudh Dh S' II. 3 34 — पुत्र is probably an interpolation made before Âpastamba's time s. Baudh loc, cit (b) यदा om P U text तु पुत्र° P, पुत्र मुवन् G¹, (c) पुत्र जनयति P pr m, Md, P U M U यमस्य सा° P U (d) भार्यां रिक्षन्ति P U, text भार्यां सारक्षन्ति N U sec. m, (e) रक्षयत P U text रक्षथ G U¹, (f) मोघ ते वेत्ता P, U text वेत्ता P pr m, M. U text वदा G U² pr m,

II 6, 13 8 दृश्यते P U, M U

II. 6 13 11. अनुबोद्ध्य Md.

II 6, 13, 11 रथतिय N U text, P sec m, Md, G¹ ², आधिरथनव G U² रथशत P, U text रथ शत Mt U P pr m, धर्मार्थसंबन्ध P, P U text, M U text, Mr U text according to the Hir. Dh Su G U¹ begins a new Sûtra with तन्मिथुया G U² has only a portion of the text and of the Com.

II. 6, 13, 12 ज्येष्ठं हि M I

## २. ६, १४.

जीवन्पुत्रेभ्यो दायं विभजेत्समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥ १ ॥

पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥ २ ॥

तदभाव आचार्य आचार्याभावेऽन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥ ३ ॥

दुहिता वा ॥ ४ ॥

सर्वाभावे राजा दायँ हरेत ॥ ५ ॥

ज्येष्ठो दायाद इत्येके ॥ ६ ॥

देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥ ७ ॥

रथः पितुः परीभाण्डं च गृहे ॥ ८ ॥

अलंकारो भार्याया ज्ञातिधनं चेत्येके ॥ ९ ॥

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १० ॥

मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ॥ ११ ॥

अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते ॥१२

अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनां सह चरन्तीति तस्मात्स्नातकस्य मुखं रेभायतीव तस्माद् बस्तश्च श्रोत्रियश्च स्त्रीकामतमाविति ॥ १३ ॥

सर्वे हि धर्मयुक्ता भागिनः ॥ १४ ॥

---

II 6, 14 1 उन्मत्त च पतित च G U[3], च om P U, M U, पतित om N U
II 6 13 3 चोपयोजयत P U, M U text
II 6, 14 5 हरेत् Devanagari Mss in G[3]
II 6 14 6 दायहर P, P U, M U
II 6 14 8 परिभाण्ड Devanagari Mss and G[2] G U[1] doubtful
II 6, 14 10 तच्छास्त्रै प्र° G[1]
II 6, 14, 12 अथापि om G[3] अथ पि नित्यानुवादमविधिमाहुर्धनेन G[1], नथापि G U[1]
II 6 14, 13 तथापि G[2] सह सञ्चरति G U[3], रेकायतीव M L, N, G[2], G U[1]

यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोपि तमभागं कुर्वीत ॥१५

जायापत्योर्न विभागो विद्यते ॥ १६ ॥

पाणिग्रहणाद्धि सहत्वं कर्मसु ॥ १७ ॥

तथा पुण्यफलेषु ॥ १८ ॥

द्रव्यपरिग्रहेषु च ॥ १९ ॥

न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति ॥ २० ॥१४॥

२, ६, १५.

एतेन देशकुलधर्मा व्याख्याताः ॥ १ ॥

मातुश्च योनिसंबन्धेभ्यः पितुश्चा सप्तमात्पुरुषाद्यावता वा संबन्धो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान्परिहाप्यापरिसंवत्सरान् ॥ २ ॥

मातापितरावेव तेषु ॥३ ॥

हर्तारश्च ॥ ४ ॥

भार्यायां परमगुरुसंस्थायां चाकालमभोजनम् ॥ ५ ॥

आतुरव्यञ्जनानि कुर्वीरन् ॥ ६ ॥

केशान्प्रकीर्य पांसूनोप्यैकवाससो दक्षिणामुखाः सकृदुपमज्ज्योत्तीर्योपविशन्ति ॥ ७ ॥

एवं त्रिः ॥ ८ ॥

---

II 6, 14, 15 द्रव्याणि om. P. U., P. sec. m.

II 6, 14, 16 N. U. join Sutras 16-17

II. 6, 14, 18 The Devanagari Mss. of the com. join Sutras 18-19. पुण्याक्रियासु N. U.

II 6, 14, 20 क्रिया नैमित्तिके Devanāgari Mss. except P. sec. m. according to the Hir. Dh. Su., क्रिया स्तेय P. U. नैमित्तिकदाने M. I. स्तेय मिषु N. U.

II 6, 15, 2. विज्ञायते Md., N. U. begins new Sutras with यावता । तेषा गर्भान ॥

II 6, 15, 4 भर्तारश्च G. U[1]; P. U. joins Sūtras 3-4

II 6, 15, 5 भार्यायाः P., G. U[1], G. U[2] Com.

II 6, 15, 7 N. U. joins 7-9, G. U[1] Sutras 7-8; तेष पांसू G. U[1]; उपवि om. P. U. text.

तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत्स्त्रिय आहुस्तत्कुर्वन्ति ॥ ९ ॥

इतरेषु चैतदेवैक उपदिशन्ति ॥ १० ॥

शुचीन्मन्त्रवतः सर्वकृत्येषु भोजयेत् ॥ ११ ॥

देशतः कालतः शौचतः सम्यक्प्रतिग्रहीतृन इति दानानि प्रतिपादयति ॥ १२ ॥

यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥ १३ ॥

न क्षारलवणहोमो विद्यते ॥ १४ ॥

तथावरान्नसंसृष्टस्य च ॥ १५ ॥

अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति ॥ १६ ॥

---

II 6, 15 9 After उत्सिच्य Md inserts the following S'lokas विवाहे चैव निर्वृत्ते चतुर्थेनहनि रात्रिषु । सप्योऽभवेत्तथा मन्त्रैरस्थिमांसत्वचैः सह ॥ एकत्वं सहते भर्तुः पिण्डे गोत्रे च सूतके । तस्मादुदकपिण्डे च भर्तुर्गोत्रेण दीयतामिति ॥

II 6, 15 10 चैवमेक G U[a] — After this Sutra M U Mr U P U and N U, insert the following Sutras ब्राह्मणश्चा [ °श्च M U °णाश्च N U ] एतस्मिन्काले मास्या केशश्मश्रूणि वापयन्ति ।[ वा वपन्ति M U ] समावृत्ता न वापयेरन् [वा वपेरन् M U ] । न विहारिण इत्येके अनध्यानाध्ययनाय शयना दक्षोपस्पर्शनान्याकाङ्क्षमनूचानेषु व्यह त्र्यह षडह द्वादशाह वा गुरुष्वनशानवर्जं संवत्सरं मातरि पितर्याचार्ये इत्येके ॥ P pr m has the first three Sutras on which the Devnāgarı Mss of the Ujjvalā give a commentary, which is however, Mahadeva's on the Hir Dh Su. N U says at the end of the passage ब्राह्मणा वृत्तिः । The Hiranyakesi Sutra has the same words but it gives instead of ब्राह्मणश्च the word ब्राह्मणान् which stands after एक at the end of the passage and belongs to our Sutra 11 The Grantha Mss Md. and N show no trace of the interpolation which is due to a corrector of the Devanagarı Mss with the help of Mss. of the Hiranyakesi sutra

II 6 15 12 शौचतश्च Md प्रतिगृहीतृत Devanāgarı Mss which however cannot be relied on, as they are copies of Grantha Mss and as Haradatta is silent regarding the form

II 6 15 13 यस्याग्नौ N U P U, P pr m, M U Mr U, P P U leaves out the Com and joins Sutras 13 15 यस्मै दीयते P U

II 6 15 14 M.U[b] join Sūtras 14 15

II 6 15 15 तथावर॰ om. PU N U.

II 6 15 16. अहवि वस्य om. Md G[1] M U, P U begin a new Sutra with तद्धुतम्

न स्त्री जुहुयात् ॥ १७ ॥
नानुपेतः ॥ १८ ॥
आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति ॥ १९ ॥
आ परिसंवत्सरादित्येके ॥ २० ॥
यावता वा दिशो न प्रजानीयुः ॥ २१ ॥
औपनयनादित्यपरम् ॥ २२ ॥
अत्र ह्यधिकारः शास्त्रैर्भवति ॥ २३ ॥
सा निष्ठा ॥ २४ ॥
स्मृतिश्च ॥ २५ ॥ १५ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने षष्ठः पटलः समाप्तः ॥

२. ७. १६

सह देवमनुष्या अस्मिँल्लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिँल्लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच ॥ १ ॥
प्रजानिःश्रेयसा च ॥ २ ॥
तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे ॥ ३ ॥
मासि मासि कार्यम् ॥ ४ ॥

II 6, 15, 21 आर्तायु M U Mr U, P U

II 6, 15 22 औपनयनादि° P U, G[1,2]

II 7, 16 2 प्रजानिःश्रेयसाय च P M U, G U[2] Haradatta prefers and explains this reading प्रजानिःश्रेयसार्थं P U Mr U om the Sutra The reading given above exhibits the old Vedic instrumental of an i-stem ending in a, . .

II 7 16, 4 मासि मासि श्राद्धम् G U[2] श्राद्धं कार्यम् G U[1], M U insert before this Sutra मासि श्राद्धमपरपक्षस्योत्तमेऽहनि । कर्तव्यमितिशेषः । अकरणे प्रत्यवायश्रवणात् । नित्यमुत्तमेऽहनि अमावास्यायां स्पष्टमाहापस्तम्बः ॥ मासि मासि कार्यम् ॥ and then follows the Com on the latter words P, U, Mr U have the same words down to अमावास्यायां giving however उत्तरे for उत्तमे and they omit the real Sutra The interpolation has been taken from the Hir Dh Su and Mahadeva's Com thereon.

अपरपक्षस्यापराह्णः श्रेयान् ॥ ५ ॥

तथापरपक्षस्य जघन्यान्यहानि ॥ ६ ॥

सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन्प्रीणाति ।

कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ७ ॥

प्रथमेहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते ॥ ८ ॥

द्वितीयेस्तेनाः ॥ ९ ॥

तृतीये ब्रह्मवर्चसिनः ॥ १० ॥

चतुर्थे क्षुद्रपशुमान् ॥ ११ ॥

पञ्चमे पुमाँसः । बह्वपत्यो न चानपत्यः प्रमीयते ॥ १२ ॥

षष्ठेध्वशीलोक्षशीलश्च ॥ १३ ॥

सप्तमे कर्षे राद्धिः ॥ १४ ॥

अष्टमे पुष्टिः ॥ १५ ॥

नवम एकखुराः ॥ १६ ॥

दशमे व्यवहारे राद्धिः ॥ १७ ॥

एकादशे कृष्णायसं त्रपुसीसम् ॥ १८ ॥

द्वादशे पशुमान् ॥ १९ ॥

त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यः । युवमारिणस्तु भवन्ति ॥ २० ॥

चतुर्दश आयुधे राद्धिः ॥ २१ ॥

---

II. 7, 16, 5 N. U. joins अपरपक्षस्य with the preceding Sutra

II 6, 17, 6 अपर॰ om M U., P U., P pr. m

II. 6, 17, 8 अपत्य P, N. U. text, अपत्य M. U text.

II. 6, 17, 12 बह्वपत्यो भव्यापत्यो न P pr. m, M. U., Mr U, P. U, N; though the second word is explained in several Devanâgarî copies of the Com, it is an interpolation taken from the Hiranyakesi Sûtra.

II 6, 17, 14 कर्षेराद्धिः P., M.U, Mr.U., P U.

II 6,17,17. व्यवहारराद्धिः Mr U., M.U.

II. 6, 17, 18 ॰सीसं वा P. U.

II. 6, 17, 19 द्वादश्यां Mr. U. Similarly in Sutras 20-22 त्रयोदश्यां । चतुर्दश्यां । पञ्चदश्यां ॥

पञ्चदशे पुष्टिः ॥ २२ ॥

तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि ॥ २३ ॥

स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयाँसं च कालम् ॥ २४ ॥

तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन ॥ २५ ॥

संवत्सरं गव्येन प्रीतिः ॥ २६ ॥

भूयाँसमतो माहिषेण ॥ २७ ॥

एतेन ग्राम्यारण्यानां पशूनां माँसं मेध्यं व्याख्यातम् ॥ २८ ॥

॥ १६ ॥

२. ७. १७.

खड्गोपस्तरणे खड्गमाँसेनानन्त्यं कालम् ॥ १ ॥

तथा शतबलेर्मत्स्यस्य माँसेन ॥ २ ॥

वार्ध्राणसस्य च ॥ ३ ॥

प्रयतः प्रसन्नमनाः सृष्टो भोजयेद् ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान् ॥ ४ ॥

गुणहान्यां तु परेषाँ समुदेतः सोदर्योऽपि भोजयितव्यः ॥ ५ ॥

एतेनान्तेवासिनो व्याख्याताः ॥ ६ ॥

अथाप्युदाहरन्ति ॥ ७ ॥

---

II. 7, 16, 23 व्रीहियवा om P. U.

II 7, 16, 24 च om N, Md., P. U, स्नेहवत्येव-पितृणां प्रीणाति G U², पितॄन् प्रीणाति G U¹.

II 7, 16, 27. भूयाँस च कालमत N

II 7, 17, 1. आनन्त्यकाल N, Mr U.; आनन्त्यं N. U, M. U, and Haradatta according to Mr U, P U., G U², but his reading is अनन्त according to the Com. in G U² G U¹ has both times आनन्त्य in the Com

II 7, 17, 2 च मत्स्यस्य Md

II 7, 17, 3 वार्धीणस्य P, [illegible] in N

II 7, 17, 4 °सृष्टो P, P. U, G², but see the Com.; °संबन्धान् P

II. 7, 17, 5 गुणहानौ P U, समुदितः N, U, N

संभोजनी नाम पिशाचभिक्षा नैषा पितॄन् गच्छति नोत देवान्।
इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥ ८ ॥
इहैव संभुञ्जती दक्षिणा कुलात् कुलं विनश्यतीति ॥ ९ ॥
तुल्यगुणेषु वयोवृद्धः श्रेयान् द्रव्यकृशश्चेप्सन् ॥ १० ॥
पूर्वेद्युर्निवेदनम् ॥ ११ ॥
अपरेद्युर्द्वितीयम् ॥ १२ ॥
तृतीयमामन्त्रणम् ॥ १३ ॥
त्रिःप्रायमेके श्राद्धमुपदिशन्ति ॥ १४ ॥
यथा प्रथममेवं द्वितीयं तृतीयं च ॥ १५ ॥
सर्वेषु वृत्तेषु सर्वतः समवदाय शेषस्य ग्रासावरार्घ्यं प्राश्नीयाद् यथोक्तम् ॥ १६ ॥
उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥ १७ ॥
उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते ॥ १८ ॥
काममुद्ध्रियतां काममग्नौ क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥ १९ ॥
श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ॥ २० ॥
श्वित्रः शिपिविष्टः परतल्पगाम्यायुधीयपुत्रः शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥ २१ ॥

---

II 7, 17, 8 सभोजिनी P U, नाथG U¹, नो च M d, नापि M U, Mr U
II 7, 17, 9 सभुञ्जति P s c m, G U¹ G², the quantity of the last vowel is uncertain in G U²³, सभुञ्जती P U Com Mr U, M U, G, सभाजिनी P U भिक्षा P U text
II 7, 17, 11 निमन्त्रण Md P U and M U, join Sutras 11-13
II 7, 17, 13 आमन्त्रण G U¹
II 7, 17, 16 ग्रासवरार्घ्यं G¹, M 1, N P U G U Com G U³
II 7, 17, 17 N U adds तिलप्रकरण च according to the Hiranyakesi Sutra
II 7, 17, 21 श्वित्री N, P U Com G U³ Com, श्वित्रशिपि° G U³ text M U Mr U add after the first word कुष्ठी सर्वविक्रयी वृषलीपती राजभृत N U adds after आयुधीयपुत्र । कुष्ठी वृषलीपति सर्वविक्रयी राजभृत्योऽप्रज्ञात The additions have been taken from the Hiranyakesi Sutra.

त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रः श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति ॥ २२ ॥

न च नक्तं श्राद्धं कुर्वीत ॥ २३ ॥

आरब्धे चाभोजनमा समापनात् ॥ २४ ॥

अन्यत्र राहुदर्शनात् ॥ २५ ॥ १७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने सप्तमः पटलः समाप्तः ॥

२. ८. १८

विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् ॥ १ ॥

कृष्णधान्यं शूद्रान्नं ये चान्येनाद्यसंमताः ॥ २ ॥

अहविष्यमनृतं क्रोधं येन च क्रोधयेत् । स्मृतिमिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत् ॥ ३ ॥

अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगः स्थानासनिकः संवत्सरमेतद् व्रतं चरेत् । एतदष्टाचत्वारिंशत्संमितमित्याचक्षते ॥ ४ ॥

नित्यश्राद्धम् ॥ ५ ॥

---

II. 7, 17, 22. त्रिणाचिकेतः all Mss. except Md., N. U., P. U., पञ्चाग्नि G[1], M. U.; ज्येष्ठसामिको G., G. U.[1], °सामिको G[3], G. U[1] Com.; वेदाध्याय्य N., P. pr. m. The readings ज्येष्ठसामिको । वेदाध्यायी and पञ्चाग्नि are mentioned by Haradatta, likewise another one, not found in our Mss. श्रोत्रियपुत्र, P. U. and M. U. add after श्रोत्रिय । मन्त्रब्राह्मणवित् P. pr. m. has the same word which has been corrected to °संतान.

II. 7, 17, 23. This Sûtra and the following ones down II. 8, 18, 2 (text) are omitted in G. U[1].

II. 7, 17, 24. [illegible] समापनात् [illegible].

II. 7, 17, 25. G. [illegible] Sûtra. According to Haradatta it was [illegible] by the N[illegible] [illegible] to stand before Sûtra 24. G. U[illegible] Sûtra 24 [illegible].

II. 8, 18, 2. [illegible] I. U.

II. 8, 18, 3. [illegible] M. 1, पुष्टि च M. 1; G. U[1] [illegible] स्वर्गं पुष्टिं, P. U., G. U[illegible] b[illegible] Sûtra with स्मृतिम्.

II. 8, 18, 4. उपस्पृशन् P. U., M. U. G. 1, G. U[illegible] [illegible] P. [illegible] अष्टाचत्वा° G[1], G. U[1], N. U.

बहिर्ग्रामाच्छुचयः शुचौ देशे संस्कुर्वन्ति ॥ ६ ॥

तत्र नवानि द्रव्याणि ॥ ७ ॥

यैरन्नं संस्क्रियते येषु च भुज्यते ॥ ८ ॥

तानि च भुक्तवद्भ्यो दद्यात् ॥ ९ ॥

समुदेतांश्च भोजयेत् ॥ १० ॥

न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ ११ ॥

एवं संवत्सरम् ॥ १२ ॥

तेषामुत्तमं लोहेनाजेन कार्यम् ॥ १३ ॥

मानं च कारयेत्प्रतिच्छन्नम् ॥ १४ ॥

तस्योत्तरार्धे ब्राह्मणान्भोजयेत् ॥ १५ ॥

उभयान् पश्यति ब्राह्मणांश्च भुञ्जानान् माने च पितॄनित्युप दिशन्ति ॥ १६ ॥

कृताकृतमत ऊर्ध्वम् ॥ १७ ॥

श्राद्धेन हि तृप्तिं वेदयन्ते पितरः ॥ १८ ॥

तिष्येण पुष्टिकामः ॥ १९ ॥ १८ ॥

२. ८ १९.

गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ प्राश्य च यद्वातो नातिवाति तदासीनोऽजिनं वस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत ॥ १ ॥

---

II 8 18 6 कुर्वंति P

II 8, 18 8 च om P U एषु च G U² text and com

II 8 18 10 समुदिताश्च M U P U असमुदिताश्च Mr U

II 8 18 14 च om G U²

II 8 18, 15 ब्राह्मणान् भोजयेत् om

II 8 18 16 उभयोश्च P U text उभयांश्च P U Com M U, Mr U, मानन N मानन च G U² text इति om. Md

II 8 18 17 अत om G U²³ text

II 8 18 18 श्राद्धकरन G¹ तृप्त हि N C¹ N U G U² तृप्त निवदय त G U²

II 8, 19 1 प्राश्य P M1 G U¹ mentioned by Haradatta प्राश्य च G U², तदासीना G U³ वस्तश्च N U वस्तस्य च M1

अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ २ ॥
औदुम्बरश्चमसः सुवर्णनाभः प्रशस्तः ॥ ३ ॥
न चान्येनापि भोक्तव्यः ॥ ४ ॥
यावद्ग्रासँ संनयन् ॥ ५ ॥
अस्कन्दयन् ॥ ६ ॥
नापजह्नीत ॥ ७ ॥
अपजह्नीत वा ॥ ८ ॥
कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् ॥ ९ ॥
न च मुखशब्दं कुर्यात् ॥ १० ॥
पाणिं च नावधूनुयात् ॥ ११ ॥
आचम्य चोर्ध्वौ पाणी धारयेदा प्रोदकीभावात् ॥ १२ ॥
ततोऽग्निमुपस्पृशेत् ॥ १३ ॥
दिवा च न भुञ्जीतान्यत्र मूलफलेभ्यः ॥ १४ ॥
स्थालीपाकानुदेश्यानि च वर्जयेत् ॥ १५ ॥
सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥ १६ ॥
नैय्यमिकं तु श्राद्धँ स्नेहवदेव दद्यात ॥ १७ ॥

II 8, 19, 2 अनायुष्य हि N., agreeing with the Hiranyakes'i Sutra

II 8 19, 3 मसत्त. G[1], P, N, and Devanagari copies of the Ujjvala. N U. divides this Sutra into thre

II 8, 19, 4 भोक्तव्यम् G U[1 2 3] Haradatta prefers this reading, but likewise mentions the other one

II. 8, 19, 5 All Mss of the Com except N. U. join Sutras 5 9, but repeat them nearly al separately

II 8, 19, 7. अपजिह्नीत P, G[1], N U, P U, M U, Mr U, G U[1], G[1] has only the beginning and th end of Sutras 7–11

II 8, 19, 8 अपजिह्नीत P, N, N U, P U, M U, Mr U, G[2], G U[1]

II 8, 19 10 च om P P U Mr U

II 8, 19, 11 धनुयात P., P U, M U Mr U

II 8, 19, 12 आचम्योर्ध्वौ P P. U, M U Mr U G[1]

II 8, 19, 15 °कानुद्देश्यान्यानि P, P U °नुद्दिश्यानि Md. °नुद्देश्यानि N, N U, G[1].

II 8, 19, 17 तु om P, N, P. U च for तु N U श्राद्ध om G U[2]

सर्पिर्मांसमिति प्रथमः कल्पः ॥ १८ ॥

अभावे तैलँ शाकमिति ॥ १९ ॥

मघासु चाधिकँ श्राद्धकल्पेन सर्पिर्ब्राह्मणान् भोजयेत् ॥ २० ॥१९॥

२. ८. २०.

मासिश्राद्धे तिलानां द्रोणं द्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत् ॥ १ ॥

समुदेतांश्च भोजयेन्न चातद्गुणायोच्छिष्टं दद्युः ॥ २ ॥

उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामः स्थालीपाकँ श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणं भोजयित्वा पुष्ट्यर्थेन सिद्धिं वाचयीत ॥ ३ ॥

एवमहरहरा परस्मात् तिष्यात् ॥ ४ ॥

द्वौ द्वितीये ॥ ५ ॥

त्रीँस्तृतीये ॥ ६ ॥

एवँ संवत्सरमभ्युच्चयेन ॥ ७ ॥

महान्तं पोषं पुष्यति ॥ ८ ॥

आदित एवोपवासः ॥ ९ ॥

आत्ततेजसां भोजनं वर्जयेत् ॥ १० ॥

भस्मतुषाधिष्ठानम् ॥ ११ ॥

पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत् ॥ १२ ॥

---

II 8, 20 1 तेनोपायेनोपयोजयेत् N, P pr m, P U, G U[1].

II. 8, 20, 2 समुदिताश्च N pr m

II. 8, 20, 3 अपरार्ध्यं M. U, उपवासमुपोष्य P. sec. m, ब्राह्मणान् N U, सिद्ध G U[1] text sec m वाचयेत् N U

II 8, 20, 7 तेषामभ्युच्चयेन G[1]

II 8, 20, 11 P joins Sutras 11–12, N U om the text

II 8, 20, 12 पदस्य P U, text G[1]

प्रेङ्खोलनं च पादयोः ॥ १३ ॥
जानुनि चात्याधानं जङ्घायाः ॥ १४ ॥
नखैश्च नखवादनम् ॥ १५ ॥
स्फोटनानि चाकारणात् ॥ १६ ॥
यच्चान्यत् परिचक्षते ॥ १७ ॥
योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च ॥ १८ ॥
प्रतिपादयिता च तीर्थे ॥ १९ ॥
यन्ता चातीर्थे यतो न भयं स्यात् ॥ २० ॥
संग्रहीता च मनुष्यान् ॥ २१ ॥
भोक्ता च धर्माविप्रतिपिद्धान् भोगान् ॥ २२ ॥
एवमुभौ लोकावभिजयति ॥ २३ ॥ २० ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्नेऽष्टमः पटलः समाप्तः ॥

## २. ९, २१.

चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति ॥ १ ॥
तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥
सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः ॥ ३ ॥
सर्वेषामनूत्सर्गो विद्यायाः ॥ ४ ॥
बुद्ध्वा कर्माणि यत् कामयेत तदारभेत ॥ ५ ॥

---

II, 8, 20, 13 प्रेंखोळन G. U[1 2 3], प्रेंखोलं Md. प्रेंखोळन G[1 2], N, U joins Sutras 13-14

II, 8, 20, 14 अत्याधान P. P. U, जघाया Md., अत्याधान G U[1].

II, 8, 20, 15 'वादन' Md, P. &c. in N U. G U[1], G[2], this reading is mentioned by Haradatta, N. U joins Sutras 15-16

II 8,20,19. च om N U, चातीर्थे G U[1], text

II 8, 20, 21 मनुष्याणां N

II 9, 21, 1 वानप्रस्थम् N. Md, G[1], G U[1 2] text, Mr U text.

II 9, 21, 3 समानाचार्य' Md

II 9, 21, 4 अनूत्सर्गे P. P. U. text, N U. text, N U places Sûtra 4 after Sutra 5, agreeing with the Hiranyakes'i Sutra

II 9 21. 5. कामयेद् Md.

यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः ॥ ६ ॥

अथ परिव्राजः ॥ ७ ॥

अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ ८ ॥

तस्योपदिशन्ति ॥ ९ ॥

अनग्निरनिकेतः स्यादशर्माशरणो मुनिः ।
स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत् ॥ १० ॥

तस्य मुक्तमाच्छादनं विहितम् ॥ ११ ॥

सर्वतः परिमोक्षमेके ॥ १२ ॥

सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ॥ १३ ॥

बुद्धे क्षेमप्रापणम् ॥ १४ ॥

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५ ॥

बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १६ ॥

एतेन परं व्याख्यातम् ॥ १७ ॥

अथ वानप्रस्थः ॥ १८ ॥

अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ १९ ॥

---

II 9 21 6 अनूपसीदताचार्ये° Md, अनुवसीदताचार्ये° P U text अनूपसीदत G U[s], अनुप्रयुञ्जानस्य N U., according to the Hiranyakeśi Sutra, ब्रह्मचारिणः om N

II 9 21, 7 Left out in N

II. 9, 21, 8 अत एव om N, व्रजति P, P U, अत्र व्रजति Md

II 9 21, 10 Md. has the first five words twice, उपलभ्य P U

II 9, 21, 12 सर्वतो मोक्षम् P U मोक्षमेति Md, मोक्षमित्येके P sec m according to the Hiranyakeśi Sutra

II 9 21, 13 °दुःखे प्रियाप्रिये वेदानिम P, N, N U, P U, Mr U but not explained in the Com

II. 9 21, 16 उपलभ्येत P., pr m and text, m, M U, Mr. U, उपालभेत G[1], G U[1]

II 9, 21, 19 P. U joint Sutras 19 20

तस्योपदिशन्ति ॥ २० ॥

एकाग्निरनिकेतः स्यादशर्माशरणो मुनिः ।
स्वाध्याय एवोत्सृजमानो वाचम् ॥ २१ ॥ २१ ॥

२. ९. २२.

तस्यारण्यमाच्छादनं विहितम् ॥ १ ॥

ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत् ॥ २ ॥

अन्ततः प्रवृत्तानि ॥ ३ ॥

ततोपो वायुमाकाशमित्यभिनिश्रयेत् ॥ ४ ॥

तेषामुत्तर उत्तरः संयोगः फलतो विशिष्टः ॥ ५ ॥

अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति ॥ ६ ॥

विद्यां समाप्य दारं कृत्वाग्नीनाधाय कर्माण्यारभते सोमावरार्ध्यानि यानि श्रूयन्ते ॥ ७ ॥

गृहान् कृत्वा सदारः सप्रजः सहाग्निभिर्बहिर्ग्रामाद् वसेत् ॥ ८ ॥

एको वा ॥ ९ ॥

शिलोञ्छेन वर्तयेत् ॥ १० ॥

न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥ ११ ॥

अभिषिक्तश्च जुहुयात् ॥ १२ ॥

शनैरपोऽभ्यवेयादभिघ्नन्नभिमुखमादित्यमुदकमुपस्पृशेत् ॥ १३ ॥

---

II 9, 21, 21 G U[1 2] join Sutras 20 21, वत्सृजमानो P P U Md., N U,

II. 9,22,2 पर्णै and इति om P U, फलै om Md, N पर्णै om P pr m, M. U, पर्णै Mr U, M U

II. 9, 22 7 दार च Md, आरभते Md, G[1 2], आरभेत P U M U, Mr U, according to the Hiranyakesi Sutra. सोमापरार्ध्यानि G U[2] Com

II. 9, 22, 8 सप्रजा. Md., गृहान्–सप्रज om G[1]

II 9, 22 10 सिलोञ्छन Grantha Mss

II 9, 22, 11 G U[1] joins Sutras 11 12

II 9, 22, 13 अभ्युपेयात् G[2], अभ्युपेयात् G U[1], अनभिघ्नन् P, P U, M U, Mr U, and in the Com. न ताडयेत् but the Com of the Grantha Mss is हस्तेनोदकं ताडयन्नुदकमुपस्पृशेत्। अभिमुख आदित्यम् P U, M U, अभिमुखमादि॰ P sec m.

इति सर्वत्रोदकोपस्पर्शनविधिः ॥ १४ ॥

तस्य द्वंद्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासिपरशु-
दात्रकाजानाम् ॥ १५ ॥

द्वंद्वानामेकैकमादायेतराणि दत्वारण्यमवतिष्ठेत ॥ १६ ॥

तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः प्रतीक्षाच्छादनं च ॥ १७ ॥

येषु कर्मसु पुरोडाशाश्चरवस्तेषु कार्याः ॥ १८ ॥

सर्वं चोपांशु सह स्वाध्यायेन ॥ १९ ॥

नारण्यमभ्याश्रावयेत् ॥ २० ॥

अग्न्यर्थं शरणम् ॥ २१ ॥

आकाशे स्वयम् ॥ २२ ॥

अनुपस्तीर्णे शय्यासने ॥ २३ ॥

नवे सस्ये प्राप्ते पुराणमनुजानीयात् ॥ २४ ॥ २२ ॥

## २. ९. २३.

भूयांसं वा नियममिच्छन्नन्वहमेव पात्रेण सायं प्रातरर्थमाहरेत्
॥ १ ॥

ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयँश्चरेदन्ततः प्रवृत्तानि ततोपो

II. 9, 22, 14. उदकस्पर्शन° P, P U., N. U., M. U.

II. 9, 22, 15 Before this Sūtra P.U, N. U insert क्षारलवणमधुमांसानि वर्जयेत् ॥ गतमतम्, according to the Hiranyakeśi Sūtra, द्वंद्व P.; द्वंद्वपात्राणां N. U., एकैक G¹, Md; उपदिशंति om. Md., N U.; पाकार्थं Md., N.U., पाकार्थं भोजनार्थं P., P.U. M.U., वासी P. U., M. U, वाचि Md; दात्र P. sec. m.

II 9, 22, 16. द्वंद्वानाम् om N.U according to the Hiranyakeśi Sutra, इतराणि दत्वा om G. U¹, N. U., अवतिष्ठेत् N U., M U; अवतिष्ठते Md., G. U².

II 9, 22, 17. होमवृत्तिः P., होमावृत्ति N. U; च विहितम् P.U., P., according the Hiranyakeśi Sūtra; विहितम् N. U.

II. 9, 22, 18. ते कार्याः P. U., N. U., N P. sec m, G U¹ text, according to the Hir. Dh. Su.

II. 9, 22, 20. न om. G¹·².

II 9 23, 2 पर्णैः for पर्णैः P.U., M U, according to the Hiranyakeśi Sūtra.

वायुमाकाशमित्यभिनिश्रयेत् तेषामुत्तर उत्तरः संयोगः फलतो विशिष्टः ॥ २ ॥

अथ पुराण श्लोकावुदाहरन्ति ॥ ३ ॥

अष्टाशीतिसहस्राणि ये प्रजामीषिरर्षयः ।
दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥ ४ ॥

अष्टाशीतिसहस्राणि ये प्रजां नेषिरर्षयः ।
उत्तरेणार्यम्णः पन्थानं तेमृतत्वँ हि कल्पते ॥ ५ ॥

इत्यूर्ध्वरेतसां प्रशँसा ॥ ६ ॥

अथापि संकल्पसिद्धयो भवन्ति ॥ ७ ॥

यथा वर्षं प्रजादानं दूरे दर्शनं मनोजवता यचान्यदेवं युक्तम् ॥८॥

तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ९ ॥

त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते ॥ १० ॥

यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसँस्कारो विधीयते ॥ ११ ॥

---

II, 23, 3. P. U., M. U., N. U., G U[1] join Sūtras 3-4, G U[1] separates them by a horizontal stroke.

II 9, 23, 4 ईषिर ऋषय. P., M U., Mr U, G U[1], एषिर मोषय G[1]; the second line becomes perfectly regular, if the vedic form पन्थां is substituted for पन्थानम्

II. 9, 23, 5 नेषिर ऋषयः P., M U., Mr U., G U[1], नेषिर मोषय. G[1], कल्पते is, of course, an old corruption of the text for भेजिरे, probably dating from a period antecedent to Āpastamba's times. In the second line the metre requires पन्थां

II. 9, 23, 8 °जवता यथा° G[1] [1]

II 9, 23, 9. °फलत्वाच P., pr m, P.U, एतान् om. P. U.

II 0, 23, 10. निष्ठात्र Md, निष्ठाः G[2], आचारो वेदा प्रमाणम् Md, आचारः प्रमाण N.U. text, आचारप्रमाणम् N.; आचारो न प्रमाणम् P. according to the Hiranyakesi Sūtra

II 9, 23, 11, श्मशानं श्रूयते P. U

ततः परमनन्त्यं फलं स्वर्ग्यशब्दं श्रूयते ॥ १२ ॥ २३ ॥

## २. ९. २४.

अथाप्यस्य प्रजातिममृतमाम्नाय आह । प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति ॥ १ ॥

अथापि स एवायं विरूढः पृथक् प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत् ॥ २ ॥

ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां सांपरायेण कीर्तिं स्वर्गं च वर्धयन्ति ॥ ३ ॥

एवमवरोवरः परेषाम् ॥ ४ ॥

आ भूतसंप्लवात् ते स्वर्गजितः ॥ ५ ॥

पुनः सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥ ६ ॥

अथापि प्रजापतेर्वचनम् ॥ ७ ॥

त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् ।
य एतानि कुर्वते तैरित् सह स्मो रजो भूत्वा ध्वंसतेऽन्यत् प्रशंसन्निति ॥ ८ ॥

तत्र ये पापकृतस्त एव ध्वंसन्ति यथा पर्णं वनस्पतेर्न परान् हिंसन्ति ॥ ९ ॥

---

II 9 23 12 स्वार्ग्यं शब्द् G[1,3] स्वर्गशब्द Md., P, N, P U, M U G U[1] text अनन्त G U[1] text

II 9, 24, 1 P U and M U begin a new Sutra with प्रजामनु

II 9, 24 3 The text of the Sutra om N U तदु कर्मसु Nd. सुवर्गं N स्वर्ग्यं G U[1] P U and M U join Sutras 3-6

II 9, 24 4 अपरापर P pr m., अवरो पर Md.

II 9, 24 5. स्वर्गञ्जीविन N, Md., G U[2]

II 9 24 6 पुन स्वर्गे all Mss but see the Com, and the Hiranyake i Sutra has too सर्गे

II 9 24 7 P U joins Sutras 7 8

II 9, 24 8 त्रै वि° G[1] त्रयीविद्यां M U, P U N, त्रयाविं°N U, प्रजापति G U[1], P U text sec. m, श्रद्धां प्रदानम् om G U[2]

II 9 24 9 न परान् हिंसन्ति N U परां हिंसन्ति G[1,3], न परान् हिंसन्ति om P U, M U Mr U text P P U M U, and Mr U begin a new Sutra with यथा

नास्यास्मिँल्लोके कर्मभिः संबन्धो विद्यते तथा परस्मिन् कर्मफलैः ॥ १० ॥

तदेनेन वेदितव्यम् ॥ ११ ॥

प्रजापतेर्ऋषीणामिति सर्गोयम् ॥ १२ ॥

तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते ॥ १३ ॥

स्यात् तु कर्मावयवेन तपसा वा कश्चित् सशरीरोन्तवन्तं लोकं जयति संकल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ॥ १४ ॥ २४ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने नवमः पटलः समाप्तः ॥

२. ९. २४.

व्याख्याताः सर्ववर्णानाँ साधारणवैशेषिका धर्माः। राज्ञस्तु विशेषाद् वक्ष्यामः ॥ १ ॥

दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥ २ ॥

अन्तरस्यां पुरि वेश्म ॥ ३ ॥

तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥ ४ ॥

दक्षिणेन पुरँ सभा दक्षिणोदग्द्वारा यथोभयं संदृश्येत बहिरन्तरं चेति ॥ ५ ॥

सर्वेष्वेवाजस्रा अग्नयः स्युः ॥ ६ ॥

अग्निपूजा च नित्या यथा गृहमेधे ॥ ७ ॥

आवसथे श्रोत्रियावरार्ध्यानतिथीन् वासयेत् ॥ ८ ॥

---

II. 9, 24, 10 परस्मिन् लोके P. U.

II. 9, 24, 11 N. U. and P. join Sutras 12-14 as far as पुण्यकृतः.

II 9, 94, 12 ज्वलन्त्युपलभ्यन्ते G U[1].

II 9, 24, 14 तत् om P pr.m., P.U, G U[2].

II 10 25, 2 पुरीश्च G U.

II 10, 25, 3 पुरी G[1], G U[1]

II. 10, 25, 4 P. U and M U begin a new Sutra with सद्वा°.

II. 10,25,5, सदृश्यते P. sec. m ; दृश्येत G[1].

II. 10, 25, 6. °जस्राग्नयः G. U[1]. M. U; अग्नयः om. G[2].

II. 10, 25, 8. °न्वासयेत् om. G[1], as well as Sutra 9. After this Sûtra M.U., P.U., N.U, and P pr m. insert another Sutra तेषां पूजा येपस्यात्मन· कुर्यात् [कार्या वा N U,] which seems to have been taken from the Hiranyakesi Sutra compare also above II 3,7,12

तेषां यथागुणमावसथाः शय्यान्नपानं च विदेयम् ॥ ९ ॥

गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥

न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वावसीदेदभावाद् बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥

सभाया मध्येधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेद् युग्मान् वैभीतकान् यथार्थान् ॥ १२ ॥

आर्याः शुचयः सत्यशीला दीवितारः स्युः ॥ १३ ॥

आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्योन्यत्र न विद्येरन् ॥ १४ ॥

क्षेमकृद् राजा यस्य विषये ग्रामेरण्ये वा तस्करभयं न विद्यते ॥ १५ ॥ २५ ॥

## २. १०, २६.

भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद् ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ॥ १ ॥

ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोनन्तदक्षिण इति ॥ २ ॥

एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥ ३ ॥

---

II 10, 25, 9 तेभ्यो N U according to the Hir Su, शय्याश्च P N G², N U, P U text

II 10 25,11 P U begins new Sutra with अभावाद्°, M U text om these words वासीदेत् G U¹ ² text

II 10, 25, 12 सभायाः P, N, G₂, P U, उद्धत्य M.U, P U, N U, G U² Com

II 10, 25, 13 देविताऱ P U., दिविताऱ G², जीविताऱ G¹.

II. 10, 25, 14 आयुग्रहणनृ° Md., नृत्य° P, P U, N. U

II 10 26 1 अनुरोधेन N U., ददात् N U, दद्यात् P sec m, यथार्थम् Md, G. U om क्षेत्र—जयति

II 10 26,2 उपजिगीषमाण N, P sec m., G¹, G U¹ text, अपजिहीर्षमाण. M U, P U, N U, according to the Hiranyakeśi Sutra अवजिगीषमाण G U², Com., अवजि° G U² text.

II 10, 26 3 शूद्रा P. pr. m, M U, °नान्ये नियमा Md

ग्रामेषु नगरेषु चार्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् ॥४॥

तेषां पुरुषास्तथागुणा एव स्युः ॥ ५ ॥

सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥

क्रोशो ग्रामेभ्यः ॥ ७ ॥

तत्र यन्मुष्यते तैस्तत् प्रतिदाप्यम् ॥ ८ ॥

धार्म्यं शुल्कमवहारयेत् ॥ ९ ॥

अकरः श्रोत्रियः ॥ १० ॥

सर्ववर्णानां च स्त्रियः ॥ ११ ॥

कुमाराश्च प्राग् व्यञ्जनेभ्यः ॥ १२ ॥

ये च विद्यार्था वसन्ति ॥ १३ ॥

तपस्विनश्च ये धर्मपराः ॥ १४ ॥

शूद्रश्च पादावनेक्ता ॥ १५ ॥

अन्धमूकबधिररोगविहीनाश्च ॥ १६ ॥

ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥

अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः ॥ १८ ॥

बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः ॥ १९ ॥

---

II 10, 26, 4 आर्यादीन् N. U; धर्मार्थे कुशास्त्रान् प्रजा° P, P. U , N U , according to the Hiranyakesi Sutra, विदध्यात् P, P U , N U , Md, M U

II 10, 26, 5 पुरुषा G U[2], text.

II 10, 26, 6 रक्षन् N U , Md, mentioned by Haradatta as an अपपाठः

II 10, 26, 8 येर्मुष्यते P. U, मुष्यते P. sec. m., मनुष्यते G U[1] text प्रतिदातव्यम् Md.

II. 10, 26, 9 धर्म्यं G U[1,2], अपहारयेत् P. sec. m., approved of by Haradatta.

II. 10, 26, 13. विद्यार्थिनो G[1], वसन्तीति Md.

II 10, 26, 15 शूद्राश्च Md, शूद्राश्च ये G[2], शूद्रस्य P. sec. m

II. 10 26, 16 अन्धमूढ° P sec. m. N, G, G U[1], अन्धवधिरमूक°, P. U , M. U ; मूक om. G U[2].

II 10, 26, 17 वृथा द्रव्य° P. U text and Com

II. 10, 26, 18 °पूर्वकं M U, P. U, पतिंवरां कुमारीं G[1], Md, taken from the Com , बाध्यः M U text, P. U

संनिपाते वृत्ते शिश्नस्यच्छेदनँ सवृषणस्य ॥ २० ॥
कुमार्यां तु स्वान्यादाय नाश्यः ॥ २१ ॥
अथ भृत्ये राज्ञा ॥ २२ ॥
रक्ष्ये चात ऊर्ध्वं मैथुनात् ॥ २३ ॥
निर्वेषाभ्युपाये तु स्वामिभ्योवसृजेत् ॥ २४ ॥ २६ ॥

२. १०. २७.

चरिते यथापुरं धर्माद्धि संबन्धः ॥ १ ॥
सगोत्रस्थानीयां न परेभ्यः समाचक्षीत ॥ २ ॥
कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥
तदिन्द्रियदौर्बल्याद् विप्रतिपन्नम् ॥ ४ ॥
अविशिष्टँ हि परत्वं पाणेः ॥ ५ ॥
तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ॥
नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥ ७ ॥
नाश्य आर्यः शूद्रायाम् ॥ ८ ॥
वध्यः शूद्र आर्यायाम् ॥ ९ ॥
दारं चास्य कर्शयेत् ॥ १० ॥
सवर्णायामन्यपूर्वायाँ सकृत् संनिपाते पादःपततीत्युपदिशन्ति॥११॥

---

II. 10, 26, 22. राज्ञां G[1],G[2],G U[1], राज्ञाभृत्ये P. pr. m., M. U., P U., N.U.

II. 10, 26, 24 निर्वेशा° Devanāgari Mss, °अभ्युपगमे N. U, °भ्यस्तेवसृजेत् P.U, विसृजेत् G[2], G.U[1] अपसृजेत G. U[2], text.

II. 10, 27, 3. P adds sec.m. सगोत्रायैव तु समाचक्षीत देवराय तदभावे सपिण्डेभ्यः; apparently taken from the Com.

II. 10, 27, 5. अवशिष्ट Md, G[1], G[2], G.U[1] text, N. U. mentioned by Haradatta as an अपपाठः.

II 10, 27, 6 खलु om. N. U.

II 10, 27, 7. अपात्यात् Md., M. U.,N. U, आपत्यात् N , mentioned in the Com as the usual reading

II. 10, 27, 10. कर्षयेत् M U., P.U., N.U , P. pr. m.

II.10,27,11. पतति। उपदिशन्तीत्युपदिशन्ति N. U. with the explanation: उपदिशन्ति प्रायश्चित्तमेव कर्तव्यं पुनरुक्तेरादरः सूचितः ॥ इत्युपदिशन्ति om. N.

एवमभ्यासे पादः पादः ॥ १२ ॥
चतुर्थे सर्वम् ॥ १३ ॥
जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः ॥ १४ ॥
वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ॥ १५ ॥
पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥ १६ ॥
चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥
नियमातिक्रमणमन्यं वा रहसि बन्धयेत् ॥ १८ ॥
आ समापत्तेः ॥ १९ ॥
असमापत्तौ नाश्यः ॥ २० ॥
आचार्य ऋत्विक् स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २१ ॥
॥ २७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने दशमः पटलः समाप्तः ॥

२. ११. २८

क्षेत्रं परिगृह्योत्थानाभावात् फलाभावे यः समृद्धः स भावि तदपहार्यः ॥ १ ॥
अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥ २ ॥
तथा पशुपस्य ॥ ३ ॥
अवरोधनं चास्य पशूनाम् ॥ ४ ॥

---

II 10, 27, 14 आर्यधार्मिकम् G[1] M U

II 10, 27, 15 पदे for पथि Md., आसने शयने वेति M.U ,P U चेति N U P, pr m.

II 10, 27 16 परदारानुमवत इति N, and N U Com according to the Hiranyakeśi-Sutra

II 10, 27, 17 चक्षुर्निरोध N, Md.,G[3] P U sec. m., N U ,but see the Com, चक्षुषि निरोध G U[1] text

II 10, 27 18. °मातिक्रामिणम् N , P U Com N U बोधयेत् N G[1], om all from वा to ऋत्विक् Sutra 21

II 10 27, 19 समाप्ते P, M U , P U, G U[2]; N U joins Sutras 18-19

II 10 27, 20 असमाप्तौ P, M U , P U N U Com G U , G[1]

II. 11, 28 4 अपरोधन N Md.

हित्वा व्रजमादिनः कर्शयेत् पशून् नातिपातयेत् ॥ ५ ॥
अवरुध्य पशून् मारणे नाशने वा स्वामिभ्योवसृजेत् ॥ ६ ॥
प्रमादादरण्ये पशूनुत्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योवसृजेत् ॥ ७ ॥
पुनः प्रमादे सकृदवरुध्य ॥ ८ ॥
तत ऊर्ध्वं न सृक्षेत् ॥ ९ ॥
परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः ॥ १० ॥
विदुषो वाससः परिमोषणम् ॥ ११ ॥
अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ॥ १२ ॥
प्राप्तनिमित्ते दण्डाकर्माणि राजानमेनः स्पृशति ॥ १३ ॥ २८ ॥

२. ११. २९.

प्रयोजयिता मन्ता कर्मेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥ १ ॥
यो भूय आरभते तस्मिन् फलविशेषः ॥ २ ॥
कुटुम्बिनौ धनस्येशाते ॥ ३ ॥
तयोरनुमतेन्येपि तद्धितेषु वर्तेरन् ॥ ४ ॥
विवादे विद्याभिजनसंपन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥ ५ ॥
संदेहे लिङ्गतो दैवेनेति विचित्य ॥ ६ ॥

---

II. 11, 28, 5 भित्त्वा G.[1], G. U.[2], आशिनः md, नातिपादयेत् G[1], G U.[1,2] नातिवापयेत् N.U., नातीव तापयेत् Md, G. U[1,3], begin a new Sutra with नातिपा°

II. 11, 28, 6 विसृजेत् Md. G [1,3], G U[1], text

II. 11, 28, 7. सृष्टान् Md, विसृजेत् Md, G[1,2]. G.U[1].

II. 11, 28, 9. तत परम् Md

II. 11, 28, 10. गन्धे om N.

II 11, 28, 11. परीमोषणं Md., परिमोक्षणं M U., P.U, P. pr m, G[2], G U[1].

II. 11, 29, 1 अनुमन्ता N U., च कर्मसु Md,

II 11, 29, 3 कुटुम्बिनौ G[1,2], G. U,[1,3]

II 11, 29, 4 कुर्वीरन् G.U[1] text, हितेषु च P sec m

II 11, 29, 6 निचित्य G[1], विचिन्त्य M.U P U, N U, ते च निर्णयन्तः add M U, P U.

पुण्याहे प्रातरग्नाविद्धेपामन्ते राजवत्युभयतः समाख्याप्य सर्वानुमते मुख्यः सत्यं प्रश्नं ब्रूयात् ॥ ७ ॥

अनृते राजा दण्डं प्रणयेत् ॥ ८ ॥

नरकश्चात्राधिकः सांपराये ॥ ९ ॥

सत्ये स्वर्गः सर्वभूतप्रशँसा च ॥ १० ॥

सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥ ११ ॥

आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥ १२ ॥

कृच्छ्रा धर्मसमाप्तिः समाम्नातेन। लक्षणकर्मणात्तु समाप्यते ॥ १३ ॥

तत्र लक्षणम्। सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तँ सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत। एवमुभौ लोकावभिजयति ॥ १४ ॥

स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयादित्येक इत्येके ॥ १५ ॥ ॥ २९ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्न एकादशः पटलः समाप्तः ॥

॥ इति द्वितीयः प्रश्नः समाप्तः ॥

॥ समाप्तं चेदमापस्तम्बीयधर्मसूत्रम् ॥

---

II 11, 29, 7. समाख्याप्य: Md. P. pr. m., G[1 2], समाख्या G[1]. U, समाप्याख्याप्य G. U[2], text, Com. once समाख्याप्य

II. 11, 29, 13 समाम्नातेन N., P. Sec. m., G[1], N. U., U[1], समाम्नायेन G. U[1], कर्मणा तु N., G[2], P.U., N.U.G. U[1,2], but see the Com. The reading कर्मणात्तु has been caused by a Prakrtic doubling of the ta of तु.

II. 11, 29, 14 वृत्तं स्वधर्मनिरतानां P.U. N. U., P. pr. m

II. 11, 29, 15. स्त्रीभ्यश्च सर्ववर्णेभ्यो G[2].

# CRITICAL REMARKS ON THE TEXT OF THE EXTRACTS

In the first edition the text of the extracts from the Ujjvalā was given exclusively according to the Devanagari MSS Mr U I being the chief authority for those from the first Praśna, and P U and Mr U II for those from the second. A comparison of the three Grantha commentaries G U 1, 2, 3 and of M U * has shown that the text of the Ujjvalā is corrupt even in the oldest and best Northern MSS and that the Southern ones, though occasionally at variance with each other furnish as might be expected a much better version There is a very large number of passages, in which all the Devanagari MSS exhibit one and the same inferior or unintelligible reading against a better one of the Southern copies, or show interpolations or omissions. But it happens also that one or several of the Grantha MSS side with the Northern copies, while the remainder has different readings. Among the three Grantha MSS available for this edition G U 1 most frequently stands by itself while the two copies of the Burnell Collection G U 2, 3 come closer to those from the Dakhan and Benares. There are however, cases in which the contrary is observable A few examples will make this more intelligible —

| D U.[1] | Dharma Sutra I 2 14 | G U |
|---|---|---|
| अर्घोन[2] । ऊनमिति सर्वत्रापेक्ष्यते । चतु॰ र्विंशतिवर्षाणि प्रतिवेद पद् ॥ | | अर्धेन । ऊनमित्युपसमस्तमप्यपेक्ष्यते । चतु र्विंशतिवर्षाणि प्रतिवेद पद् ॥ |
| | 1 2 28 | |
| विना शिरसा मुखार्थमुष्णोदकादिना शरीर न प्रक्षालयेत्[3] ॥ | | प्रक्षालनादिना अशुद्ध्या विना शोभार्थ- मुष्णाम्बादिना न प्रक्षालयेत् ॥ |
| | 1 2 37 | |
| सैरी सीरवाहाय कृता रज्जु । तमालादण्[4] । तमालसंज्ञो वृक्षस्तस्य त्वचा ग्रथिता तामली । | | सैरी[5] सीरवाहयोक्त्ररज्जु । तमलो मूलोदक- सञ्ज्ञो[6] वृक्षस्तस्य त्वचा ग्रथिता तामली[7] ॥ |

* For the description of these MSS, See Part I, p L f

1 D U refers to the Northern Text and G U to the Southern

2 Omitted in M U, the oldest and best Devanāgarī MS

3 Thus also G U 2 3

4 Om. in M U

5 Om. in G U 1, सैर वाह —

6 तामेलो G U 1 तमरो मूलयमशो G U 2 3

7 तामरो G U 2, 3 Text and Com

1 2 41

| | |
|---|---|
| कषायेण रक्तं वस्त्रं काषायम् । तच्च काषाय ब्राह्मणस्येत्यर्थाद्गम्यते इतरयोर्वक्ष्यमाणत्वात् ॥ | एक आचार्या वस्त्रं च धार्यमुपदिशन्ति[1] । वस्त्रं कार्पासं तच्च काषायं कषायेण रक्तम् ॥ ब्राह्मणस्येत्यर्थाद्गम्यते इतरयोर्वक्ष्यमाणत्वात् ॥ |

1 9 6

| | |
|---|---|
| शम्याप्रासात् । पञ्चमीनिर्देशादर्वागिति गम्यते । शम्या क्षिप्ता यावति देशे पतति ततोऽर्वागिति[2] ॥ | शम्याप्रासात् । शम्या क्षिप्ता यावति देशे पतति ततोऽर्वागिति पञ्चमीनिर्देशाद्गम्यते ॥ |

1 11 1.

| | |
|---|---|
| काण्डोपाकरणं काण्डव्रतादेशनम् । तस्मिन्नहन्यमातृकस्याद्य भुक्त्वा सम्प्रदोषमहरनध्याय । [एतेनोत्तरं व्याख्यातम्][3] ॥ | काण्डोपाकरणं काण्डव्रतादेशनम् । तस्मिन्नहन्यमातृकस्याद्य भुक्त्वा सम्प्रदोषमहरनध्याय अपर आह । भुक्त्वेति नानुवर्तते तथा चोत्तरत्र भवत्वाग्रहणम् । काण्डोपाकरणे निमित्तेऽमातृकस्य माणवकस्य सम्प्रदोषमहरनध्याय । एतेनोत्तरं व्याख्यातम् ॥ |

1 11 13

| | |
|---|---|
| *ये मनुष्या भूत्वा प्रकृष्टेन तपसा देवाः संपन्ना*स्ते मनुष्यप्रकृतयो देवाः । ब्राह्मे पुराणे कुबेरनन्दीश्वरकुमारादयः । तेषां यज्ञस्तत्प्रीत्यर्थं ब्राह्मणभोजनम् । तत्र भुक्त्वा सम्प्रदोषमहरनध्याय इत्येके मन्यन्ते । मनुष्यमुखेषु देवेष्विज्यमानेष्वित्यन्ये ॥ | ये मनुष्या भूत्वा प्रकृष्टेन तपसा देवाः संपन्नास्ते मनुष्यप्रकृतयो देवाः । नन्दीश्वरकुबेरादयः[4] । तेषां यज्ञे तत्प्रीत्यर्थं[5] ब्राह्मणभोजने भुक्त्वा सम्प्रदोषमहरनध्याय इत्येके मन्यन्ते । मनुष्यमुखेषु[6] देवेष्विज्यमानेष्वित्यन्ये ॥ |

1 11 6

| | |
|---|---|
| यस्मिन्नहनि काण्डमुपाकृतं च[7] न तत्तदहरधीयीत । अहरित्यहोरात्रोपलक्षणम् ॥ | यस्मिन्नहनि काण्डमुपाकृतं[8] न तत्तदहरधीयीत । तथा श्रावण्यां पौर्णमास्यामुपाकृत्य[9] प्रदास्तेहरन्तरे यस्य काण्डस्यानुवाक्यमध्येतुमारम्भं कुर्वीत[10] न तत्तदहरधीयीत । अहरित्यहोरात्रोपलक्षणम् ॥ |

11 15 5

| | |
|---|---|
| *भार्या पत्नी परमगुरव आचार्यमातापितरः* । तस्या मरणम् । भार्याया मस्थिताया परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनम् । किं तर्हि । परेद्युरा तस्मात्कालादभोजनम्[11] ॥ | भार्या पत्नी । परमगुरवो मातापितराचार्याः । संस्था मरणम् । भार्यायाः संस्थायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनं । किं तर्हि । अपरेद्युरा तस्मात्कालादभोजनम्[12] ॥ |

1 वस्त्रमनु° C L3 वस्त्रच्छायनु° G U1
2 Thus also C U 1 3 —
3 The bracketted words are found in M U
4 नन्दीश्वरकुमारादय C U 2 3
5 तत्प्रीत्यर्थे C L 13 —
6 मनुष्यमुखेन C U1
7 च om M L
8 दुपाकृतम् C U2
9 पौर्णमास्याम् om, C L 1 3 —
10 °कुर्वीत तु वाक्यमध्येता तु मारम्भ मुपारम्भ कुर्वारम्भ कुर्वात G L1
11 Thus also C U 1 which however reads अपरेद्यु°

1 Thus C L 2 3 the second of which has also भार्यायां in the text of the Sutras and … in the com.

In most of these passages, where the Southern MSS together oppose the Devanagari copies the superiority of the former is very plain, and it can be easily shown how the errors arose. Thus in the remarks on Dh Su. I 2 14 the reading अर्थेन is clearly a marginal gloss, which originally was intended to illustrate the note of the commentary, and was later incorporated with it. The fact that the best Devanagari MS, M U, omits अधान is a confirmation of this view. The substitution of सर्वेत for उपमन्त्तमपि has been made with regard to the next Sutra. But the word is not required, since all the MSS have there again ऊनामते प्रकरणाद्‌भ्यत। At the other hand the Southern variant उपमन्त्तमपि is indispensable on account of the form पाटनम् in the preceding Sutra. Again in the commentary Dh Su I, 2, 37 the reading संत्वाइय कृता रज्जु ' a rope made for an ox dragging the plough ' is plainly a misl ction for सीरवाहयोक्त्ररज्जु " the rope of the yoke of the plough dragger, caused by a badly formed यात्र with the prsthamatra. The grammatical remark तमालादण् is entirely out of place and makes no good sense as little as the following तमालसंज्ञो, where clearly the real explanation regarding the tree mentioned in the Sutra has been lost.* Further the omissions in the notes on Dh Su I, 11, 1 and 6 have been evidently caused by the circumstance that in the former the phrase सप्रदोपमद्दस्नध्याय occurs twice, and in the latter the sentence न तदहरर्थ यति. Finally, it is not difficult to see that the version of the remarks on Dh Su I, 11 3 is better in the Grantha MSS than in the Northern ones. But it is interesting to observe that the corrupt readings कुमार and तन्नर्थ्ये occur already in some of the former. This fact indicates that the corruption of Haradatta's text must not be laid solely to the charge of the Dakhani Pandits. And there are many other points which confirm this view.

With respect to the cases, where one or two Grantha MSS, side with the Devanāgari copies it will suffice to note that the frequent discrepancies of the commentary in G U¹ appear to be due to intentionally made abbreviations, and that the rarer deviations in G U²* probably have been caused either by negligence or by the adoption of different readings in the text of the Sutras. Under the circumstances stated the extracts had to be corrected for the present edition according to the Grantha copies, and especially according to G U¹ and G U², which show not so many clerical mistakes as the very badly written G U³. Wherever these MSS unanimously oppose those in Devanāgari characters, their readings have been adopted. In case they differ, and one agrees with the Devanāgari copies, the version of the latter has been retained. But in the more important cases of this kind the *variæ lectiones* of the Grantha MSS have been given in the notes.

* With the form तमाल compare तार्क्ष्य Gobhila Gr Sū. II. 10 10, which, according to the commentary, means "hempen"

# Corrigenda to Extracts from Commentary

## ॥ उज्ज्वलाशुद्धिपत्रम् ॥

| पत्रम् | पङ्क्तिः । | शुद्धम् । |
|---|---|---|
| ९७ | ४ | आचान्तेन |
| १०० | २२ | °येत् |
| ,, | २३ | १९ |
| १०१ | ९ | °न्धि° |
| १०३ | २४ | ग्र° |
| ,, | २५ | पा° |
| १०६ | १ | °क्षोभि° |
| १०९ | ३ | °स्त° |
| ११२ | २३ | °ष्टस्य |
| ११३ | ६ | °ञ्चु° |
| ,, | २४ | °क्षा° |
| °११६ | २३ | °या सम्भावेत |
| ,, | २४ | °स्तप |
| १२२ | २ | तैर्न° |
| १२४ | १५ | निग° |
| १२६ | ७ | °ष्ट° |
| १२७ | १२ | °ग्नौ |
| १२८ | ११ | स्थितस्या° |
| १३० | १८ | नाग्रा° |
| १३१ | २५ | °कृतम् |
| १३३ | २५ | °पङ्° |
| ,, | २६ | रष्ट्वा |
| १३४ | १२ | °णा° |
| १३५ | २ | °स्तस्या° |
| १३७ | २ | °द्भवति स च स्वतन्त्रः |
| १३८ | १९ | °ष्टं° |
| १३९ | ६ | °पत्ति° |
| १४० | २६ | तमेवम्भूतमा° |
| ,, | २७ | प्राग्भवमानुकूल्यं |
| ,, | २८ | निपुण सूक्ष्म° |
| १४१ | ९ | °दन-दस |
| १४२ | ४ | °र्वस्य° |
| १४३ | २३ | °र्थः |
| १४९ | १५ | °र्यवम° |
| १५९ | ६ | °ली द्वा° |
| ,, | ११ | प्रजापतये |
| १६० | २० | °द्र° |
| १६८ | ११ | °च्छ° |
| १७४ | १ | °द्या° |
| ,, | २३ | °तिः।” |
| १७९ | ९ | °र्दां |
| ,, | १३ | °शान्ति |
| १८२ | ५,६ | °साव° |
| ,, | १० | क्षीरो° |
| १८३ | १ | °रुद्य° |
| १८४ | १४ | °स्क° |
| १८७ | १४ | ब्रु° |
| १९१ | ९ | °साः |
| ,, | २२ | भो° |
| १९४ | १९ | °ष्म° |
| १९६ | १९ | ११ |
| ,, | २० | अग्र° |

# EXTRACTS

FROM

# HARADATTA'S COMMENTARY CALLED UJJVALĀ.

## PRAŚNA I PAṬALA I. KHAṆḌIKĀ I.

प्रणिपत्य महादेवं हरदत्तेन धीमता ।
धर्माख्यप्रश्नयोरेषा क्रियते वृत्तिरुज्ज्वला ॥

१. अथशब्द आनन्तर्ये । अतःशब्दो हेतौ । उक्तानि श्रौतानि गार्ह्याणि कर्माणि । तानि च वक्ष्यमाणान्धर्मानपेक्षन्ते । कथम् । 'आचान्तेन कर्तव्यं' 'शुचिना कर्तव्यं' 'पवित्रपाणिना कर्तव्यं' 'यज्ञोपवीतिना कर्तव्य'मितिवचनादाचमनशौचादीन्यपेक्षन्ते । 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मणी'तिवचनात् संध्यावन्दनम् । एव 'मशुचिकरनिर्वेषाः' 'द्विजातिकर्मभ्यो हानिः पतन'मिति- [ गौ० ध० शा० २१, ४ ] वचनाद्ब्रह्महत्यादिप्रायश्चित्तान्यपि । एवमन्येष्वपि यथासम्भवमपेक्षा द्रष्टव्या । अतस्तदनन्तरं सामयाचारिकान्धर्मान्व्याख्यास्यामः । पौरुषेयी व्यवस्था समयः । स च त्रिविधः । विधिर्नियमः प्रतिषेध इति । तत्र प्रवृत्तिप्रयोजनो विधिः 'संध्योश्च बहिर्ग्रामादासनं वाग्यतश्चे'त्यादिः [१,३०,८]। निवृत्तिप्रयोजनावितरौ । 'प्राङ्मुखोऽन्नानि भुञ्जीते'ति नियमः ( १, ३१, १ ) क्षुदुपघातार्था भोजने प्रवृत्तिः । शक्या च यत्किंचिदिङ्मुखेनापि भुञ्जानेन क्षुदुपहन्तुम् । तत्र नियमः क्रियते प्राङ्मुख एव भुञ्जीत न दक्षिणामुख इति । परिसंख्या नियमस्यैव कियानपि भेदः । एवं द्रव्यार्जने रागात्प्रवृत्तं प्रति नियमो याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो द्रव्यमर्जयेन्न कृषिवाणिज्यादिनेति । 'ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जये'दित्यादिः [ १, ३१, ६ ]प्रतिषेधः। समयमूला आचाराः समयाचारास्तेषु भवाः सामयाचारिकाः । एवंभूतान्धर्मानिति । कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मस्तद्धेतुभूतं कर्मव्याख्यानमेवैतद्व्याख्यानम् । तत्र विधिषु तावद्विधेयानुष्ठानाद्धर्म इति नास्ति विप्रतिपत्तिः । नियमेष्वपि नियमानुष्ठानाद्धर्मः प्रतिषेधेष्वपि नञर्थानुष्ठानाद्धर्म इति केचित् । अत एव धर्मानित्य-

विशेषेणाह। अन्ये तु विधिष्वेव धर्मः। इतरयोस्तु विपरीतानुष्ठानादधर्मः केवलं न तु विषयाननुष्ठानात्कश्चिद्धर्मः। न ह्यप्रतिगृह्णन्नपिबन्सुरां धार्मिक इति लोके प्रसिद्धः। सूत्रेपि धर्मग्रहणमधर्मस्याप्युपलक्षणमिति स्थितिः॥

२. किं तु भोः समयो यदि प्रमाणमिदमपि प्रमाणं भवितुमर्हति। 'चैत्यं वन्देत स्वर्गकामः। प्रागेव भुञ्जीत। केशॉल्लुञ्चेत्। तिष्ठन्भुञ्जीत। न स्नाया'दिति। तत्राह। धर्मज्ञेत्यादि॥ न ब्रूमः समयमात्रं प्रमाणमिति। किं तर्हि। धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः॥

३. कथं पुनरिदमवगतं धर्मज्ञा मन्वादयो न बुद्धादय इति। यद्युच्येत न बुद्धादीनामतीन्द्रिये धर्मे ज्ञानं संभवतीति तन्मन्वादिष्वपि समानम्। अथ तेषां धर्मज्ञानातिशयादतीन्द्रियेपि ज्ञानं संभवतीति तद्बुद्धादिष्वपि समानम्। यदाहुः।

'सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा।
तावुभौ यदि धर्मज्ञौ मतिभेदः कथं तयो'रिति॥

वक्तव्यो वा विशेषः। तमाह। वेदाश्च। चोवधारणे। वेदा एव मूलप्रमाणं धर्माधर्मयोः। न च नित्यनिर्दोषेषु वेदेषूक्तोपालम्भसंभवः। स्वतःप्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामाण्यम्। तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणं धर्मज्ञानां तु वेदाः प्रमाणम्। ........॥

४. ब्राह्मणाद्याश्चत्वारो वर्णसंज्ञकाः। ते च सामयाचारिकैर्धर्मैरधिक्रियन्ते। चतुर्णामेवोपदेशेपि पुनश्चतुर्ग्रहणं यथाकथंचिच्चतुर्ष्वन्तर्भूतानामपि ग्रहणार्थम्। ततश्च ब्राह्मणः क्षत्रियो वैश्य इति बौधायनादिभिरुक्तानामनुलोमजानामत्र ग्रहणं मतम्।.........॥

६. ..............उपायनमुपनयनम्। ............तस्माद् दुष्टकर्मप्रतिषेधार्थं सूत्रम्। यथा शाखान्तरे। 'द्विजातिकर्मभ्यो हानिः पतन'मिति [ गौ० ध० शा० २१, ४ ]। अप्रतिषेधे तु दुष्टकर्मणामप्यधिकारो भवत्येव 'फलवन्ति च कर्मा'णीत्यभिधानात्। क्रियत इति कर्मेति निर्वचनात्। 'प्रागुपनयनात्कामचारभक्ष' इति गौतमस्मरणं [ २, १ ]। ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वप्रसङ्गाद्दुष्टकर्मणामुपनयनमित्युक्तम्। शूद्रप्रतिषेधस्तु प्राप्तानुवादः॥

१०. अनेकवेदाध्यायिना वेदव्रतवदुपनयनमपि प्रतिवेदं भेदेन कर्तव्यमिति प्राप्त उच्यते। सर्वेभ्य इत्यादि॥ 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापति'रिति मनुः ( २ । ११ )। ततश्चोपनयनं सावित्र्यनुवचनम्। तन्मुखेन सर्वे वेदा अनूक्ता भवन्ति। अतोग्रहणाविशेष-

त्रैविदेकमेवोपनयनं सर्वार्थम् । अस्मिन्नर्थे ब्राह्मणमपि भवति ब्राह्मणमेव वा पठितम् आथर्वणस्य वेदस्य पृथगुपनयनं कर्तव्यम् । तथा च तत्रैव श्रुतम् । 'नान्यत्र संस्कृतो भृग्वङ्गिरसोधीयीते'ति ॥

१२. अविच्छिन्नवेदवेदिसंबन्धे कुले जन्माभिजनः । पङ्क्तिरङ्गैः सह यथावदर्थज्ञानपर्यन्तमधीतो वेदो विद्या सर्वासम्भवे वेद एव वा । ....... ॥

१३. तस्मिन्नेवोपनेतरि विद्याकर्म विद्याग्रहणं कर्तव्यमान्तमा समाप्तेः । अविप्रतिपन्ने धर्मेभ्यः । यद्यसावाचार्यो धर्मेभ्यः प्रच्युतो न भवति । प्रच्युते तस्मिन्नसंपर्कार्हेन्यतो विद्याकर्म भवत्येव । येषां चाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते । कथम् 'उपनीयाध्यापनेनाचार्यकं भावये'दिति सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारः संभवतीति तं कथमन्योध्यापयेत् । एतेन मध्य आचार्यमरणे तद्वृत्तमध्ययनं नाचार्यान्तरात्सम्भवतीति द्रष्टव्यम् ॥

२७. आकारोभिविधौ । अनत्ययोनतिक्रमः स एवानात्ययः । यावृच्छिको दीर्घः । आङो[1] वा प्रयोगः । प्रकरणादुपनयनस्येति गम्यते । यथा व्रतेषु समर्थः स्यात्तथैतावान्कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सत्यष्टमवर्षादतिक्रमे वक्ष्यमाणं प्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तं कालमसमर्थानां पश्चात् सामर्थ्ये सति प्रायश्चित्तं भवत्येव ॥

२८. यस्य यः सावित्र्याः काल उक्तस्तदतिक्रमे त्रैविद्यकम् । त्र्यवयवा विद्या तामधीयते ये ते त्रैविद्यास्तेषामिदं त्रैविद्यकम् । गोत्रचरणाद्वुञ् [ पा ४,३,१२६]। 'चरणाद्धर्माम्नाययो'रिति वुञ् । एवंभूतं ब्रह्मचर्यम् । अग्निपरिचर्यामध्ययनं शुश्रूषामिति परिहाप्य सकलं ब्रह्मचारिधर्मं चरेत् ........ ॥

३०. ........शक्तस्य त्रिषवणमशक्तस्य यथाशक्ति ॥

३२. यस्य माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च ते तथाविधास्ते माणवका ब्रह्महसंस्तुता ब्रह्महण इत्येव सङ्कीर्तिता ब्रह्मवादिभिः । अतस्तास्मिंस्तच्छब्दप्रयोगस्तद्धर्मप्राप्त्यर्थः । .................... ॥

---

## PAṬALA 1, KHAṆḌIKĀ 2.

५. .............. प्रपितामहादि प्रपितामहादारभ्य प्रपितामहः पितामहः पिता स्वयं च ।................ ॥

---

[1] Thus M. U.; G U[1]., 3 read आङो.

७. गृहमेधो गृह्यशास्त्र गृहस्थधर्मो वा । नाध्यापन कृत्स्नस्य वेदस्य किं तु गृह्यमन्त्राणामेव ॥

१३. पादेनोन पादूनम् । पररूप शकन्ध्वादित्वात् । षट्त्रिंशद्वर्षाणि । प्रतिवेद नव ॥

१४ ऊनमित्युपममत्तमप्यपेक्ष्यते । चतुर्विंशतिवर्षाणि । प्रतिवेद षट् ॥

१५ पादेरूनमिति प्रकरणादन्यते । द्वादश वर्षाणि । प्रतिवेद त्रीणि ॥

१६ अवरार्ध्यशब्दोवरमात्रेत्यस्मिन्नर्थे वर्तते । द्वादश वर्षाण्यवरमात्रा यथा भवति तथा ब्रह्मचारिणा गुरुकुले वस्तव्यम् . ॥

१७ ब्रह्मचारिविद्यार्थशब्दद्वयोरर्थ उक्त । यो ब्रह्मचारी विद्यार्थी भवति न तेन दिवसमात्रमपि परस्य समीपे वस्तव्यमाचार्यसमीप एव वस्तव्यमित्युक्त भवति । विद्यार्थस्येतिवचनान्नैष्ठिकस्य कदाचिदन्यत्र वासेपि न दोष. । यद्वा भोजननिवृत्तिरेवोपवासः परलोकार्थमुपवास परोपवास॰ स विद्यार्थस्य न भवति नैष्ठिकस्य न दोष इति । अत्र पक्ष 'आहिताग्निरनड्वा नित्यादि ( २,९,१३ ) विद्यार्थब्रह्मचारिविषयम् ॥

२१ .. .अघ शब्दस्य सवर्णदीर्घत्व छान्दसमपपाठो वा । . ॥

२२ अनुदेश्य श्राद्धान्न देवतार्थ वोद्दिष्ट तन्न भुञ्जीत ॥

२६. 'उपचारक्रिया केलि स्पर्शो भूषणवाससाम् ।
एकशय्यासनक्रीडा चुम्बनालिङ्गने तथा' ।

इत्यादे सर्वस्योपलक्षण मैथुनग्रहणम् ॥

२७ श्लाघा शोभोत्सना यस्य स उत्सन्नश्लाघः । एवम्भूतो भवेत् । म्रक्षणादिना मुखादिकमुज्ज्वल न कुर्यात् ॥

२८ विना शिरसा मुखार्थमुष्णोदकादिना शरीर न प्रक्षालयेत्[2] ॥

२९ यानि मूत्रपुरीषाद्यशुचिलिप्तान्यङ्गानि तानि काम मृदादिभि. प्रक्षालयेद्यावद्गन्धो लेपश्चापैति । तदपि गुरोरसन्दर्शे यत्र स्थित गुरुर्न पश्यति । तत्राचार्यप्रकरणे गुरुग्रहणात्पित्रादीनामपि ग्रहणम् ॥

३०. स्नाने प्राप्ते न श्लाघमान स्नायात् । किं तु दण्डवत्प्लवेत् । स्नानीये-

---

[1] G U[1] -कत ततद् U[1] -कतरन्तावद् । but see the Vārttika on Pāṇ. vi 1 94

[2] G. U प्रक्षाल्यनादिना अमृदया विना शोभार्थमुष्णोदकादिना न प्रक्षालयेद् ॥

द्रैव्यैर्मलापकर्षणं श्लाघा जले क्रीडा वा । अपर आह । 'अङ्गानि न प्रक्षालयीतेत्यासमावर्तनाभित्यस्नानस्य प्रतिषेधः । प्रक्षालयीत त्वशुचिलिप्तानीति नैमित्तिकस्नानविधिः । नाप्सु श्लाघमानः स्नायादिति तत्रैव श्लाघाप्रतिषेध' इति ॥

३१. सर्वानेव केशाञ्जटां कृत्वा बिभृयादिति ॥

३३. मुञ्जानां विकारो मौञ्जी । त्रिवृत्त्रिगुणा । एवंभूता ब्राह्मणस्य मेखला भवति । सा च शक्तिविषये शक्तौ सत्यां दक्षिणेनावृत्तानां प्रदक्षिणवृत्ताना कर्तव्या । तद्धितार्थे गुणभूतानामपि मुञ्जानामेतद्विशेषणम् ॥

३५. अथवायोमिश्रा । कचित्कालायसेन बद्धा मौञ्जी मेखला भवति राजन्यस्य ॥

३६. अविरूर्णायुः कम्बलप्रकृतिस्तत्सम्बन्धीन्यूर्णानी । तत्कृतं सूत्रमावीसूत्रम् । ....... ॥

३७. सैरी सीरवाहयोक्त्ररज्जुः । तमलो मूलोदकमंझो वृक्षस्तस्य त्वचा ग्रथिता तामली ॥

३८. ........वार्क्षो यज्ञियस्य वृक्षस्य विकार इति कल्पान्तरे पूर्वो विधिर्वर्णसंयुक्तः । अयं तु सर्वसाधारणः । अत्र च सामयाचारिक एव दण्डविधिः सर्ववर्णार्थः सन्निहानूद्यते नैय्यमोघादिषु मन्त्रप्रापणार्थम् । अन्यथा पलाशस्यैव मन्त्रेणादानं स्यात्तूष्णीमन्येषाम् । सुश्रव इत्यस्य पालाशस्याभिधानत्वात् ॥'देवा वै ब्रह्मन्वदन्त तत्पर्ण उपाश्रिणोत् सुश्रवा वै नामेति'........इति गृह्यवृत्तौ[2] ॥

३९. वस्यते कौपीनमाच्छाद्यते येन तद्वासः । तद्वस्यते ॥

४०. शणस्य विकारः शाणी पटी । क्षुमातसी तस्या विकारः क्षौमम् । श्वेतपटाख्यो वासोविशेष इत्यन्ये । अजिनं यस्य कस्यचिन्मेध्यस्य पशोः । त्रीण्येतानि वर्णानुपूर्व्येण वासांसि ॥

४१. एक आचार्या वस्त्रं च धार्यमुपदिशन्ति । वस्त्रं कार्पासं तच्च काषायं कषायेण रक्तं ब्राह्मणस्येत्यर्थाद्गम्यते । इतरयोर्वक्ष्यमाणत्वात् ॥

---

[1] सीरं वाहयोक्त रज्जुः । तामेलो मूलोदक' G. U[1], रज्जुः । तमरसंज्ञो G U[2].

[2] See Āpast. Gr Sū p. 68 ed. Winternitz, the Grantha copies of the Commentary say simply 'गृह्ये गदम्' ।

## PAṬALA 1 KHANDIKĀ 3.

२. हरिद्रया रक्तं हारिद्रम् । एतान्युत्तरीयाणि ॥

३. 'वस्ताजिन'मिति वक्ष्यमाणत्वादिहाप्यजिनमिति गम्यते । 'अजिनं त्वेवोत्तरं धारयें'दित्युपनयनप्रकरणे [ १, ३, १० ] यदजिनं धार्यमुक्तं तद्धारिणं ब्राह्मणस्य । हरिणो मृगस्तस्य विकारो हारिणम् । ऐणेयं वा कृष्णम् । एणी मृगी तस्या विकार ऐणेयम् । एण्या ढञ् [ पा० ४, ३, १५९ ] । द्विविधा एण्यः कृष्णा गौराश्च । ततो विशेष्यते कृष्णमैणेयमिति ॥

४. अस्मिन्पक्षे विशेष उच्यते । कृष्णमित्यादि ॥ कृष्णं चेद्विभृयाद्धारिणं ततस्त्वस्मिन्नुपस्तीर्णे नासीत न शयीत । अयं तावदर्थः । शब्दनिर्वाह'स्त्वसावामनशायी'-त्यत्र कृतः ॥

५. रुरुर्बिन्दुमान्मृगः ॥

७. अविरूर्णायुः । स एवाविकः । तस्य चर्माविकम् । तत्सर्वेषां वर्णानाम् । तस्य हारिणादिभिर्विकल्पः ॥

८. अयमप्याविक एव । प्रावरणमेव सर्वेषाम् । काषायं चैके वस्त्रमुपदिशन्ति ( १, २, ४१ ) इत्यारभ्य वासांस्यजिनानि च विहितानि ॥

९. तत्र कामवशेन विशेषमाह । ब्रह्मवृद्धिमित्यादि ॥ ब्रह्मवृद्धिर्ब्राह्मणवृद्धिः । क्षत्रवृद्धिः क्षत्रियवृद्धिः ॥

१०. अथ स्वपक्षमाह । अजिनमित्यादि ॥ उत्तरमुत्तरीयं तदजिनमेव धारयेत् ॥

१२. द्यूतनिस्थानं सभा । उत्सवादिषु समवायः समाजः । ताः सभाः समाजांश्च साच्छील्येन न गच्छेत् । यदृच्छया गमने न दोषः ॥

१३. जनवादः परीवादो लोकवार्ता वा ।.........॥

१५. येषु प्रदेशेषु गुरुरुदाचरति पौनःपुन्येन चरति तेषु स्वैरिकर्माणि मैत्र-प्रसाधनादीनि न कुर्यात् ॥

१७. मृदुः क्षमावान् ॥

१८. इन्द्रियाणामनाद्विषये प्रवृत्त्यभावः शमस्तद्वान् ॥

१९. विहितेषु कर्मस्वग्लानिर्दमस्तद्वान् ॥

२१. लब्धे नष्टे मृते वा धृतावेवावस्थितः स्यात् । न हृष्येन्न विषीदेत् ॥

२२. उत्साहसंपन्नः । ग्लाजिस्थश्च क्स्नुः [ पा० ३, २, १३९ ]। अत्रानुस्वारश्छान्दसोपपाठो वा ॥

२४. परभाग्यात्संतापेसूया तच्छीलो न भवेत् ॥

२५. अपपात्राः प्रतिलोमा रजकादयः । अपगतानि हि तेषां पात्राणि पाकाद्यर्थानि चतुर्भिर्वर्णैः सह । अभिशस्तान्वक्ष्यति । 'अथ पतनीयानी'त्यादिना [ १,२१,७ ] तानुभयान्वर्जयित्वान्यत्र भिक्षेत ........ सायं प्रातरितिविवचनान्न सायंगृहीतेन प्रातराशो नापि प्रातर्गृहीतेन सायमाशः ॥

२६. अथ भिक्षाप्रत्याख्यानं निन्दितुं ब्राह्मणमाकृष्यते । स्त्रीणामिति ।। व्याख्यातः समाहितो ब्रह्मचारी । याभिः स्त्रीभिर्भिक्षा प्रत्याख्यायते तासां प्रत्याचक्षाणानां स्त्रीणामिष्टं यागैरर्जितं धर्मं दत्तं दानेनार्जितं हुतं दर्विहोमैर्गोर्ह्येरर्जितं सर्वमेव धर्मं पृक्क आच्छिनत्ति । यस्मादेवं तस्माद् ब्रह्मचारिसंघं चरन्तं न प्रत्याचक्षीत । उह्वा इति निपातो वाक्यालङ्कारार्थः । अपिहशब्दौ कदाचिदित्येतमर्थं द्योतयतः। एषु संघीभूतेषु ब्रह्मचारिषु कदाचिदेवंविधः समाहित एवंव्रतः । 'अथ ब्रह्मचर्यविधि'-रित्यारभ्य [ १,२,१८ ] यानि व्रतान्युक्तानि तद्वान् ब्रह्मचारी स्यात्। संभावनायां लिङ् । .......॥

२७ भिक्षाणां समूहो भैक्षम् । न बहिर्ब्राभासेनोच्छिष्टं मन्तव्यम् । किं तु दृष्टश्रुताभ्यामेव। दृष्टमात्मनः प्रत्यक्षम्। श्रुतमाप्तोपदेशः। ताभ्यामेव तदुच्छिष्टं मन्तव्यम् अयमंशः प्राप्तानुवादः पूर्वमंशं विधातुं यथा 'नानुवपटूकरोत्यपि वोपांश्वनुवपट्कुर्या'-दिति ॥

३४. तैः स्वकुलैः सह विप्रवासेन्येभ्योपि श्रोत्रियेभ्यः प्रब्रूयात् ।.... ॥

३५. आत्मा प्रयोजनं प्रयोजको यस्य स आत्मप्रयोजनः । एवम्भूतो भिक्षां न चरेत् । आत्मार्थं न चरेदित्यर्थः । अस्य प्रयोजनम्। यदा श्रोत्रिया अपि न लभ्यन्ते तदा 'प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीते'ति वक्ष्यमाणमप्रोषितेपि यथा स्यादिति ॥

३६. अमत्रं भोजनपात्रं भुक्त्वेति संनिधानात्। तत्स्वयमेव प्रक्षालयति प्रक्षालयेत् । भिक्षापात्रस्य त्वन्येनापि प्रक्षालने न दोषः । उभयोरपि पात्रयोर्ग्रहण मित्यन्ये ॥

४०. आर्यस्त्रैवर्णिकस्तस्मा अनुपनीताय पर्यवदध्यात्सर्वमेकस्मिन्पात्रेवधाय तत्समीपे भूमौ स्थापयेत् ॥

४१. अन्तर्धानमन्तर्धिः । सोस्यास्तीति । व्रीह्यादित्वादिनिः [पा०५,२,११६]

अन्तर्धी दासः । अन्तर्हितं हि तस्य शूद्रत्वमाशौचेषु स्वामितुल्यत्वात् । प्रकरणाचाचार्यस्येति गम्यते । आचार्यदासाय शूद्राय पर्यवदध्यादित्यर्थः ॥

४२. यदि शिष्य आचार्यार्थमात्मार्थं वा प्रोषितः स्यात्तदा भैक्षात्किंचिदादायाग्नौ कृत्वा प्रक्षिप्य शेषं भुञ्जीत । श्रोत्रियाणामसद्भावे'न्येभ्योपि श्रोत्रियेभ्यः'[1] [ सू० ३४ ]इत्येतत्तु न भवति । यदि स्यात्तत्रैवायं प्रब्रूयात्तदभावेऽग्नौ कृत्वा भुञ्जीतेति'[2] । यद्यपि तत्राचार्यस्य विप्रवासः प्रकृतस्तथापि न्यायसाम्याच्छिष्यस्यापि प्रवासो भविष्यति ॥

४३. भैक्षं हविषा हविष्ट्वेन संस्तुतं संकीर्तितम् । तत्र तस्मिन्हविष्याचार्यो देवतार्थे देवताकार्ये तत्प्रीत्यर्थत्वात्तस्य ॥

४४. तस्य जाठराग्नौ हूयमानत्वात् ॥

---

## PATALA I. KHANDIKĀ 4

१. अनुवादेषु सर्वत्र विधिः कल्प्यते । तं भोजयेत् । भोजयित्वा तस्योच्छिष्टं प्राश्नीयात् । प्राश्नातीति श्नकारपाठश्छान्दसः । शादिति [ पा० ८,४,४४, ] श्चुत्वप्रतिषेधात् ॥

२. इडाभक्षणादिस्थानीयमित्यर्थः ॥

३. यदन्यानि द्रव्याणि गवादीनि भिक्षाचरणे लब्धानि समिदादीनि च स्वयमाहृतानि यथालाभमुपहरति दक्षिणा एव ताः ।............॥

५. अस्मै शिष्यायाचार्यः श्रुतिविप्रतिषिद्धमुच्छिष्टं न दद्यात् ॥

६. किं पुनस्तत् । यथेति ॥ यथेतिवचनाच्छ्रुतिविप्रतिषिद्धमिति लक्षणतः प्रतिषेधाच्च क्षारादिग्रहणमेवंविधस्योपलक्षणम् ॥

७. अभ्यङ्गशेषो गन्धशेषो माल्यशेष इत्यादयोपि ब्रह्मचारिणः प्रतिषिद्धा आचार्येण न देया इत्युक्तं भवति । केचित्तु श्रुतिविप्रतिषिद्धमप्याचार्यस्य शेषमुपयुञ्जाना दृश्यन्ते पूर्वैः पूर्वं आचारः प्रमाणमिति वदन्तः । तन्निराकरोति ॥

---

[1] श्रोत्रियाणां समावे असद्भावे. . सूयाच्च' G U[1], श्रोत्रियाणा सद्भावे चान्येभ्यो... इति तत्र भवति G U[2]

[2] Compare also note to the text.

८. अनुमानाय प्रभवतीत्यानुमानिकः । आचाराद्धि श्रुतिः स्मृतिर्वानुमीयते । तस्मादानुमानिकादाचारात्प्रत्यक्षा श्रुतिर्बलीयसी । तद्विरोधे तु नानुमातुं शक्यते । अनुमानमबाधितमिति न्यायात् । एवं च ब्रुवता ब्रह्मचारिणः क्षारलवणप्रतिषेधः प्रत्यक्षब्राह्मणमूल इति दर्शितं भवति ॥

९. यदपि क्षारलवणादिप्रतिषेधश्रुतेरुच्छिष्टव्यतिरिक्तो विषयः सम्भवति तथापि संकोचोपि तस्या अविशेषप्रवृत्ताया आनुमानिकादाचारादयुक्तः । ननु परस्परविरुद्धा अपि श्रुतय उपलभ्यन्ते । यथा गृह्णाति न गृह्णातीति । तत्किमाचारात्संकोचिकापि श्रुतिर्नानुमीयते । अत आह । दृश्यत इत्यादि ॥ स्यादेवं यद्यमाचारो गृह्यमाणकारणः स्यात् । गृह्यते तु प्रवृत्तिकारणम् ॥

१०. तत्किम् । प्रीतिरित्यादि ॥ क्षारलवणादिभोजने भुञ्जानस्य प्रीतिर्भवति । ततश्च ' यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ती'तिन्यायान्न संकोचिका श्रुतिरनुमीयत इति ॥

१२. यदि तयोर्धर्मविप्रतिपत्तिरपायो भवति ततो न भोज्यम् । यद्वा भुञ्जानस्य ब्रह्मचारिणो यदि धर्मविप्रतिषेधो भवति मधुमांसादिमिश्रितत्वेन ततो न भोज्यमिति ॥

१४. ......अधोनिधानमाचार्यस्य पुत्रादिषु बालेषु पतनशङ्कया । अपर आह । आत्मनः समिदाधानार्थमेधाहरणमिति । उक्तं हि गृह्ये । एवमन्यस्मिन्नपि सदारण्यादेधानाहृत्येति [ गृ० सू० ११, २४ ] । तदनुवादेनाधोनिधानमत्र विधीयते । दृष्टार्थमदृष्टार्थं चेति ॥

१५. .......समिद्धार इति ॥ अण् कर्मणि चेति ( पाणि० ३, ३, १२ ) तुमर्थेण्प्रत्ययः ॥

१६. परिसमूहनं परितो मार्जनम् । विप्रकीर्णस्याग्नेः राशीकरणमित्यन्ये । यथोपदेशं यथा गृह्य उक्तं तथा समिध आदध्यात् । गृह्ये विहितमपि समिदाधानं विधीयते सर्वाचरणार्थं सायं प्रातरित्यादिकान्विशेषान्वक्ष्यामीति वा ॥

१८. समिदाधानेन समिद्धमग्निं पाणिनैव परिसमूहेन्न समूहन्या । समूहनी संमार्जनी दर्भनिर्मिता वेदाकृतिराचारात् ॥

१९. .......यथाकामस्य भावो याथाकामी । ष्यञन्तत्वादीकारः ॥

२०. अग्निपरिचर्यायां परिसमूहने परिषेचने च यदुपयुक्तमुदकं तच्छेषेण वृथाकर्माण्यदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत ।.......... ॥

२१. पाणिसङ्क्षुब्धं पाणिना संक्षाभितं तेनोदकेन नाचामेत् । इदं तडागादिषु स्वयमाचमने । यदापर आचामयति तदैवेन पाणिना यदावर्जितमुदकं तेनापि नाचामेत् किन्तूभाभ्या हस्ताभ्या करकादि गृहीत्वा यदावर्जितमुदकं तेनाचामेत । एव च स्वय वामहस्तेनावर्जितेनापि नाचामेत् । अलाबुपात्रेण नालिकेरजेन वैणवेन ताम्रमयेन वा स्वयमाचमनमाचरन्ति शिष्टाः ॥

२२. पूर्वमदिवास्वापी [ १, २, २४ ] इत्यनेन दिवास्वापः प्रतिपिद्धः अनेन रात्रावपि यदाचार्यो न स्वापिति तावन्तं कालं स्वापः प्रतिपिध्यते । स्वप्न-कथनं वर्जयेदित्येके ॥

२३. अथ स्वप्नस्य प्रकृतत्वात्स्वप्नानन्तरं ब्राह्मे मुहूर्त उत्थायेत्यर्थः । अहरहर्नित्यमाचार्यं गोपायेद्रक्षेत् । किं दण्डादि गृहीत्वा । नेत्याह । धर्मार्थयुक्तैः कर्मभिः । धर्मयुक्तानि कर्माणि समित्पुष्पकुशाहरणादीनि । अर्थयुक्तानि युग्यघासाहरणादीनि ॥

२४ स ब्रह्मचारी यावदुत्थानादस्य यावच्च संवेशनादेवमाचार्यं गुप्त्वा संविशन् शयन भज'न्धर्मगोपायमाजूगुपमह'मितीमं मन्त्रं ब्रूयात् । धर्मं गोपायतीति 'धर्मगोपाय' आचार्यस्त्वं माजूगुपमह'माभिमुख्येन रक्षितवानस्मि। इदानीं तु संविशा-नीति मन्त्रार्थः । अपर आह । हे 'धर्म' मा 'गोपाय' रक्ष । 'आजूगुपमह'माचार्य-मेतावन्तं कालमिति ॥

२७. प्रसह्य वा स्वयं निवर्तयेत्पित्रादिभिर्वा निवर्तयेत् ॥

२८. . .जघन्यशब्दः पश्चादर्थः ।.... .......प्रयोजनमुपनयने मा मूपुपथा इति मंशासनस्यायमर्थः । न स्वापस्यात्यन्ताभाव इति । अथशब्दश्च वाक्योपक्रमे ॥

२९. .. .. ..प्रणिहितात्मा प्रकर्षेण निहित आचार्यकुले स्थापित आत्मा येन स तथोक्तः । प्रकर्षेणान्ततस्तत्रैव शरीरन्यासः । ... ... ...। अस्यैवंविधस्य ब्रह्मचारिणोनैव ब्रह्मचर्याश्रमे सर्वाणि फलवन्ति ज्योतिष्टोमादीनि कर्माण्यग्रात्राणि भवन्ति । तत्फलावाप्तिरेव तदवाप्तिः । .. .... .. तदेव नैष्ठिकब्रह्मचारिविषयमिदं सूत्रम् ॥

---

## PATALA II, KHANDIKĀ 5.

१. 'आचार्याधीनः स्या'दित्यादयो नियमा ये निर्दिष्टा अस्मिन्ब्रह्मचारिप्रकरणे तपःशब्दस्तेषु द्रष्टव्यो न कृच्छ्रादिषु ॥

२. तेषां नियमानामतिक्रमे विद्याकर्म विद्याग्रहणं ब्रह्म निःस्रवति गृहीतं वेदं निःसारयत्येतस्मान्नियमातिक्रमेणाध्येतुः पुरुषात्। न केवलमेतस्मात्किं तर्हि सहापत्यात्। अपत्येन सह वर्तत इति सहापत्यः। अपत्यादपि ब्रह्म निःसारयति। यद्यप्यपत्यं नियमातिक्रमकारि न भवति तथापि पितुर्दोषादेव ततोपि ब्रह्म निःसारयति। नियमातिक्रमेण विद्याग्रहणं कुर्वतः पुरुषात्सहापत्याद् गृहीतं ब्रह्म निःसारयतीति ब्रह्मयज्ञादिषूपयुज्यमानमप्यकिञ्चित्करं भवतीत्यर्थो विवक्षितः। स्रवतेः सकर्मकस्य प्रयोगो भाष्ये दृष्टः 'स्रवत्युदकं कुण्डिके'ति। अपर आह। तदतिक्रमे विद्याकर्म नियमातिक्रमेण विद्याग्रहणं न कर्तव्यम्। कुतः। यतो निःस्रवति ब्रह्म निःसरतीत्यर्थः। शेषं समानम्। निधाकर्म च निःस्रवति ब्रह्म च निःस्रवतीत्यन्ये। कुर्वत इति वाध्याहार्यम्। तदतिक्रमे विद्याकर्म कुर्वतो ब्रह्म निःस्रवतीति ॥

३. कर्तशब्देन श्वभ्राभिधायिना नरको लक्ष्यते।...........॥

४. .......... अवरेष्ववार्चीनेषु कलियुगवर्तिषु। ऋषयो न जायन्ते मन्त्रदृशो न भवन्ति नियमातिक्रमस्येदानीमवर्जनीयत्वात् ॥

५. कथं तर्ह्यद्यतना अतिक्रामन्तोपि नियमानल्पेनैव यत्नेन चतुरो वेदान्गृह्णन्ति। युगान्तरे सम्यगनुष्ठितस्य नियमकर्मणः फलशेषेणेत्याह। श्रुतर्षय इत्यादि ॥ पुनः सम्भवः पुनर्जन्म ॥

६. अत्रोदाहरणम्। यथा श्वेतकेतुः ॥ श्वेतकेतुर्ह्यल्पेन कालेन चतुरो वेदाञ्जग्राह। तथा च च्छान्दोग्यम् [ ६,१,१ ]। श्वेतकेतुर्हारुणेय आस तँ ह पितोवाच। श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोननूच्य ब्रह्मबन्धुरिव भवतीति ॥ स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामनानूचानमानी स्तब्ध एवासेति ॥

७. अन्नह पि। पररूपं कर्कन्धुवत्[1]। अपेरकारलोपो वा पिहितपिनद्धादिवत्। वेदव्यतिरिक्तमपि यत्किञ्चिद्विषमन्त्रादिकं समाहितो नियमवान्भूत्वाचार्यादुपयुङ्क्ते गृह्णाति तस्मिन्वेदव्यतिरिक्ते ब्रह्मवदेव फलं भवति ॥

९. यैरनुष्ठितैर्गुरुः प्रसीदति तानि गुरुप्रसादनीयानि पादप्रक्षालनादीनि कर्माणि। स्वस्तीत्यविनाशि नाम तत्प्राप्तिसाधनं स्वस्त्ययनम्। तच्च त्रिविधं दृष्टार्थमदृष्टार्थमुभयार्थं चेति। दृष्टार्थं बाहुनदीतरणादिनिषेधः। अदृष्टार्थं क्षारादिनिषेधः। उभयार्थं भिक्षाचरणादि। अध्ययनसंवृत्तिरधीतस्य वेदस्याभ्यासः ॥

---

[1] कर्कन्धवत् G. U.[1], [2].–

११. ... .. ... उक्ता सिद्धिः। अथो यत्किञ्च मनसेति ( सू० ५ ) अन्नोक्तानां पुनर्वचनमादरार्थम् ।. ॥

१२. सदा प्रतिदिनं महान्तमपररात्र रात्रेः पश्चिमे याम उत्तिष्ठेत् । उत्थाय च समीपे तिष्ठन्गुरोः प्रातरभिवादमभिवादयीताभिवादयेत् । .. ..॥

१४. ... .. ...इदं नैमित्तिक पूर्वं नित्यम् । अथ काम्यम् ॥

१६. . ..... मध्यसमनुदरसमं वैश्यः । ऊरुसममित्यन्ये । नीचैः पादसमं शूद्रः । प्राञ्जलिं यथा तथाभिवादयीताञ्जलिं कृत्वेत्यर्थः । प्राञ्जलिरिति तु युक्तः पाठः ॥

१७. अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लावनं कर्तव्यम् । प्लुतं कर्तव्यमित्यर्थः । पूर्वेषां वर्णाना शूद्रवर्जितानामभिवादयमानानाम् । प्रत्यभिवादेऽशूद्रे । [ पा० ८,२,८३ ] इति पाणिनीयस्मृतिः । तत्र वाक्यस्य टेः [ ८, २, ८२ ] इत्यनुवृत्तेः प्रत्यभिवादस्य वाक्यस्यान्ते नामप्रयोगस्तस्य टेः प्लुत आयुष्मान्भव सौम्या ३ इति प्रयोक्तव्यः । स्मृत्यन्तरवशान्नाम्नश्च पश्चादकारः । आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारस्तस्य नाम्नोन्ते वाच्यः पूर्वाक्षरःप्लुतः ॥ इति मनुः ( २,१२५ ) आयुष्मान्भव सौम्य देवदत्ता ३ अ इति प्रयोगः । शम्भुर्विष्णुः पिनाकपाणिश्चक्रपाणिरित्यादीना नाम्ना सम्बुद्धौ गुणे कृत "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ" विति [पा० ५,२,१०७] अयमपि विधिर्भवति । अन्ते अकारः । "तयोर्य्वावचि संहितायामि"ति [पा० ५,२,१०८] यकारवकारौ च भवतः । शम्भा ३ व । विष्णा ३ व । पिनाकपाणा ३ य । चक्रपाणा ३ य । अत्र सूत्रे "प्रत्यभिवादने चे"ति चकारस्यार्थं न पश्यामः । अपर आह । अभिवादने प्रत्यभिवादने च प्लावनमिति । अस्मिन्नपि पक्षे द्वन्द्वेनाभिहितत्वाच्चशब्दोऽनर्थक एव । अभिवादने च शाखान्तरे न क्वचित्प्लुतो विहितस्तस्मादनर्थक एव चकारः । अनर्थकाश्च निपाता बहुल प्रयुज्यन्ते ॥

१९. अन्यदा सर्वदा पूर्वोक्तेनैव प्रकारेणाभिवादनमेव । अयमनुवाद उत्तरविवक्षया ॥

२१. ... ... ..अधिशब्द उपरिभागे । अधस्ताच्चोपरिष्टाच्चाभिमृश्य सङ्गुष्ठिकं सगुल्फम् । साङ्गुष्ठमित्यन्ये । उपसंगृह्णीयात् ।... ॥

२२. . ..... कृत्याना कर्तरि वा ( पा० २, ३. १२ ) इति कर्तरि षष्ठी ....... ॥

[1] प्राञ्जलिर्यथा G U [1] --

२३. सर्वं च तदहश्च सर्वाह्नम्।..........सदा सुयुक्तः सुसमाहितोनन्यचित्तः। अध्ययनादनन्तरः। अन्तरयतीत्यन्तरः। अध्ययनाद्यथात्मानं नान्तरयति यथाध्ययनं न विच्छिद्येत तथा स्यात्। अध्याये स्वाध्यायकाले। अध्याय इत्यनुवादो "मनसा चानध्याय" इति विशेषविधानात्। अध्यायेदिति प्रायेण पठन्ति। तत्र तकारोपपाठश्छान्दसो वा॥

२४. गुरुकर्मसु च तथा सुयुक्तोनन्तरश्च स्यात्॥

२५. अनध्यायकाले च मनसाध्ययनादनन्तरः स्यात्। सन्देहस्थानानि मनसा निरूपयेत्। अध्ययनविषयामेव चिन्तां कुर्यात्॥

२६. ... .... नाध्यापने स्वयं प्रवर्तयेत्॥

---

## PAṬALA II. KHANḌIKĀ 6

३. एनमाचार्यं प्रति पादौ न प्रसारयेत्॥

४. यदा तु गुरुः खट्वायां शेते तदा तं प्रति प्रसारणं न दोषायेत्येके मन्यन्ते। स्वपक्षस्तु तत्रापि दोष इति॥

१०. ...... न सोपानत्क आसीदेनापि वेष्टितशिराः। अवहितपाणिर्दीर्घादिहस्त एवम्भूतो नासीदेत्॥

११. अध्वानं प्राप्तोध्यापन्नः। .......... ॥

१२. न चेदाचार्यसमीप उपसीदेदुपविशेत्। यदि तूपविशेदध्यापन्नः कर्मयुक्तो वा न भवेत्तदोपानत्प्रभृतीनि विहायोपविशेत्॥

१३. यो यं देवं भजते स तद्भावनयैवाचार्यमुपासीत। अविकथयन्। व्यर्था कथा विकथा। तामकुर्वन्। अविमना अविक्षिप्तमनाः। ........ ॥

१५. ...... वीतो विपर्ययेणेतः। ........ ॥

१७. अन्यत्र कुड्यादावपश्रितो न स्यात्। कुड्याद्यपश्रितो नासीत॥

१८. यदा द्विवस्त्रस्तदान्यतरेण यज्ञोपवीती स्यात्। अपि वा सूत्रमेवोपवीतार्थं इति [ २,४,२२ ]। एष कल्पस्तदा न भवति॥

१९. यदा त्वेकवस्त्रो भवति तदाधोनिवीतः स्यात्। न तस्य दीर्घस्याप्येकदेशेनोत्तरीयं कुर्यात्॥

२६. आसनयोग आसनकल्पना। आसनयोगेन विहितः सम्भावित आसनयोगविहितः। आसनयोगेनासम्भावित आचार्ये तिष्ठति च स्वयं नासीत ॥

२७. अशयनयोगविहित इति पूर्वानुसारेण गम्यते। शयनयोगेनासम्भावित आचार्ये आसीने च स्वय न संविशेन्न शयीत ॥

२८. व्यत्ययेन परस्मैपदम्। .. .. । विकीर्वेदिति तु युक्तः पाठः ॥

२९. आचार्यव्यतिरिक्ता गुरवोऽन्वक्स्थानिन इति स्मार्तो व्यवहारः। आचार्यः श्रेष्ठो गुरूणा तमपेक्ष्यान्वक्स्थान पदमेषामिति कृत्वास्याचार्यस्य संनिधावन्वक्स्थानिनं नोपसङ्गृह्णीयात् ॥

३०. न चैनमन्वक्स्थानिनं गोत्रेणाभिजनकुलादिना कीर्तयेत्स्तुवीत ॥ भार्गवोयं महाकुलप्रसूत इति ॥

३२. यद्यप्यसौ तस्याचार्यस्य गुरुः स्यात्। मातुलादिर्गुरुः स्यात्तत्र। आचार्यप्राचार्यसंनिपात इति पूजा वक्ष्यति [ १,८,१९ ] तेनैव न्यायेन मातुलादिष्वपि। प्रसङ्गादिदमुक्तम् ॥

३३ किन्तु देशाच्चासनाच्च संसर्पेत्। तस्य समानार्थम् ॥

३४. तस्याचार्यस्यान्तेवासिनं नाम्नैव कीर्तयेत्। यज्ञशर्मन्निति यद्यप्यसावात्मनो गुरुर्भवतीत्येके मन्यते। स्वपक्षस्तु गुरोर्नामग्रहणं न कर्तव्यमिति ॥

३५. यस्मिंस्तु पुरुषे शिष्याचार्यभावमन्तरेणापि विद्याचारित्राभिजना लौकिकानां गौरवं भवति तस्मिन्नन्वक्स्थानीयेप्याचार्ये या वृत्तिः सा कर्तव्या। अन्वक्स्थानीयेप्यन्वक्स्थानीय एव ॥

३६. अस्याचार्यस्य भुञ्जानस्याभुञ्जानस्य वा सकाशे भुक्त्वानुत्थाय। छान्दसो दीर्घः। उत्थानमकृत्वोच्छिष्टं न प्रयच्छेत्। आर्याय वेति [ १, ३, ४० ] यद्विहितम् ॥

---

## PATLA, II KANDAKA 7

३. उत्थाय कार्यवत्तया गन्तुमिच्छन्गुरोरपापमव्यं न पर्यावर्तेत किन्तु प्रदक्षिणीकृत्यापेयात् ॥

४. ओषधयः फलपाकान्ताः। वनस्पतयो ये पुष्पैर्विना फलन्ति वीरुद्गुल्मादीनामप्युपलक्षणम्। तेषां पत्रपुष्पाण्याच्छिद्य नोपजिघ्रेत्। आच्छिद्येतिवचनाद्यावृच्छिकगन्धग्रहणे न दोषः ॥

५. यानं शकटादि । इति शब्द एवप्रकाराणामुपलक्षणार्थः ।......॥

७. ...... अपिगृह्य हस्तेन मुखं पिधाय स्मयेतेति ब्राह्मणं न स्मयेतेत्यारभ्य ॥

८. स्नातामनुलिप्तां वा स्त्रियमबलामपि मुखेन नोपजिघ्रेत् । मुखेनेति यादृच्छिके घ्राणे न दोषः ॥

११. रजस्वलो मलिनगात्रः। रक्ता दन्ता यस्य स रक्तदन। छान्दसो दन्नादेशः। पक्वदन्त इत्यर्थः । एतदुभयमुत्सन्नश्लाघ [ १, २, २७ ] इत्यनेन गतमपि पुनरुच्यते श्रौतप्रायश्चित्तप्राप्त्यर्थम् । अनृतं वोक्त्वेति ( १, २६, ३ ) प्रायश्चित्तं वक्ष्यति ॥

१२. आत्मीये गुरौ यां विद्यां कुम्तेर्धीते तस्या गुरोर्वंश्या आचार्यास्तेऽस्य माणवकस्याचार्याः । यद्यपि साक्षात्तेभ्यो न गृह्यते विद्या तथापि त आचार्यवदुपचरितव्याः । तस्यामिति वचनाद्विद्यान्तरे ये वंश्यास्तेषु नायं विधिः ॥

१३. ......... ते माणवकस्याप्युपसंमाह्याः । किं सदा । नेत्याह । तदा तु तस्यां दशायाम् । अपर आह । तदाप्रभृत्येत उपसंग्राह्यास्तुशब्दात्समावृत्तेनापि ॥

१४. यदा द्वितीयं तृतीयं वा वेदमधीयानस्य माणवकस्य गुरुसमवायो भवति गुरवः समवेता भवन्ति तदा भिक्षायामुत्पन्नाया यं गुरुमिदानीमनुरुद्ध्य माणवको यतोधीते तदधीना भिक्षा । यच्च यावच्च लब्धं तत्तस्मै निवेदनीयं तदुक्तेऽस्य विनियोगः

१५. कृतसमावर्तनो विवाहात्प्रागार्जितं मात्रे दद्यात् ॥

१७. सोपि भर्ता गुरुं प्रापयेन्माणवकस्य गुरुम् । माणवकार्जितं द्रव्यं तद्गामि युक्तम् ॥

१८ धर्मकृत्यानि विवाहादीनि । तेषु वोपयोजयेत् । गुरोरभावे भर्ता तदभावे माता सर्वेषामभावे समावृत्तः स्वयमेव ॥

२०. ......... वैश्याच्छूद्राया जात उग्र उग्रकर्मा वा द्विजातिः ॥

२१. ।......... धर्म्यं धर्मादनपेतमित्येक आचार्या मन्यन्ते । धार्म्यपाठे स्वार्थे ष्यञ् ॥

---

[1] Thus G U[1]; G U[2] read— धर्म्यंन्धर्मादनपेतमित्येके मन्यन्ते । धर्म्यमिति [ धार्म्यमिति ] पाठे स्वार्थे ष्यम् ॥

२३. गुरवे प्राणसंशयादौ महान्तमप्युपकारं कृत्वा नानुस्मरेत् नानुचिन्तयेत्। अहो मयैतत्कृतमिति ॥

२४. इतिकरणादेवंप्रकाराणां निन्दादीनां प्रतिषेधः ॥

२५. इदं कुर्वित्याचार्येण प्रेषितस्तदेव प्रतिपद्येत कुर्यात् । क्रियमाणमपि कर्म विहाय यद्यपि तदाचार्यस्य भवति ॥

२६. तस्मिंश्चैव विद्याकर्मान्तम् [ १, १, १३ ] इत्यस्यापवादः । यद्यधिगन्तुमिष्टा विद्या शास्तुः शासितुराचार्यस्य सम्यङ्नागच्छेत तदा तस्यानागमादन्यत्र पुरुषान्तरेऽपि प्रवृत्तिर्भवत्येव यस्य सम्यगागच्छति । येषामाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यत इत्यवोचाम ॥

२७. अन्यत्रेत्युभयोः शेषः । आचार्यवदाचार्यदारे वृत्तिः कर्तव्या । किमविशेषेण । न । अन्यत्रोपसंग्रहणादुच्छिष्टाशनाच्च । पादोपसंग्रहणमुच्छिष्टाशनं चैतदुभयं वर्जयित्वा ।.................... दार इत्येकवचनं छान्दसम् ॥

२८. य आचार्येण समादिष्टो नियुक्तोऽध्यापयति तस्मिंस्तथाचार्यदारवद्वृत्तिः । अध्यापयतीति वर्तमाननिर्देशाद्यावदध्यापनमेवायमतिदेशः ॥

२९. अध्यापयतीति नानुवर्तते । तदभिनिर्देशाज्ज्ञानवयोभ्यामुभाभ्यां वृद्धो गृह्यते । सब्रह्मचारी सहाध्यायी । समाने ब्रह्मणि व्रतं चरतीति । तस्मिन्नप्याचार्यदारवद्वृत्तिः ।

आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया ।
पादं सब्रह्मचारिभ्यः पादः कालेन पच्यते ॥

इत्यध्ययन उपयोगसम्भवात् ॥

३०. उच्छिष्टाशनवर्जमितिवचनादुपसंग्रहणं भवति । एतच्च ज्ञानवयोभ्यामुभाभ्यां वृद्धेर्याद्वृद्धतर इत्यनुवर्तते । ......... ॥

३१. समावृतस्य कृतसमावर्तनस्याप्येतदेवानन्तरोक्तमेवैतप्याचार्यादिषु पुत्रान्तेषु सामयाचारिकं समयाचारप्राप्तं वृत्तमान्तात् । समादिष्टोऽध्यापयतीति [१,७,२८] विशेष उक्तः ॥

---

## PATALA II. KANDIKĀ 8.

१. समावृतस्य ब्रह्मचारिणोऽकृतविवाहस्य यथा वृत्तं वर्तनं तथा वक्ष्यामः ॥

२ माली मालावान् । आलिप्तसुरभ्यन्दनादिना । सुरग्रहणमुपलक्षणम् । 'मुखमग्रे ब्राह्मणोनुलिम्पेते'त्याश्वलायनवचनात् । सुगन्धिभिरामलकादिभिर्द्रव्यैरुपलिप्त सस्कृत केशश्मश्रु यस्य स उपलिप्तकेशश्मश्रु.। अक्तोञ्जनेनाक्ष्णोरभ्यक्तस्तैलेन । वेष्टिती वेष्टितशिरा॰। कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य स उपवेष्टिती । कञ्चुक चोपानच कञ्चुकोपानह तद्यस्यास्ति स कञ्चुकोपानही । प्रसिद्धपाठे कञ्चुकमेव काञ्चुकम् । .... । तद्वान्काञ्चुकी । उपानद्वानुपानही। 'व्रीह्यादि'त्वादिनिः। पादुके दारुमये पादरक्षणे तद्वान्पादुकी ॥

३ अस्याचार्यादे॰ पुत्रान्तस्योदाचारेपु दृष्टिगोचरेपु देशेष्वेतानि माल्यादीनि न कुर्यात्कारयेद्वा ॥

५ अवलेखन कङ्कतादिना केशाना विभागेनावस्थापनम् । इतिशब्दः प्रदर्शनार्थः । तेन स्नानभोजनमूत्रोच्चारणादिष्वपि प्रतिषेध. ॥

६ तस्य शिष्यस्य गृहस्थीभूतस्य यानि द्रव्याण्युपस्थापितानि तेषा मध्य एकेनापि द्रव्येण यथात्मा सयुज्येत तथा न कथयेत् । आचार्य शिष्यगृह प्रत्यागतो यथाहो दर्शनीय भोजनपात्रमित्यादिलिप्सा यथा गम्यते तथा न कथयेदिति ॥

७ 'वेदमधीत्य स्नास्य'न्नित्यनेन विधिना स्नातस्तस्मिन्काले यथाविध्यभिहृतमावद्ध सगायाचार्येणाहृतः स्वयमेव वा तत्समीपमभ्येतो न प्रतिसहरेत मुञ्चेदित्येके मन्यन्ते । स्वपक्षस्तु तदापि प्रतिमुञ्चेदिति । काले यथाविध्यभिहृतमितिवचनादस्मादपरेद्युरारभ्य प्रतिसहरेदेव ॥

१०. सर्वत. प्रतिष्ठित आसने नासीत । आचार्य पीठादावुपवेश्य स्वय वेत्रासनादौ नासीत । तद्धि भूमौ सर्वतः प्रतिष्ठितम ॥

११ आचार्येणाचरित उपभुक्ते शय्यासने नाभिरोच्छयने न शयीतासने नासीत । पित्रादिष्वपि गुरुपु समानमिदम । । गत समावृत्तस्य वैशेषिकम्। अथ ब्रह्मचर्यविधेरवशेष॰ ।

१२ यान शकटादि । आरोहेत्युक्तो गुरुणा पश्चादारोहेत् । 'छत्र यानमिति च वर्जये'दिति पूर्वोक्तस्य प्रतिषिद्धस्यापवाद । यान च गुर्वारूढमन्यद्वा ॥

१३ उक्तोन्वारोहेदित्येव । 'सभा॰ समाजाश्चागन्ते'त्यस्यापवादार्थं सभाग्रहणम्। निकषो नाम कृषीवलानामुपस्करण कृष्ट क्षेत्र येन समीक्रियते । तत्र कस्मिंश्चिदारूढे

---

[1] आसन [ आसीन G U[1] ] आसीत । आचार्य पीठादावुपवेश्य स्वय वेत्रासनादावासीत। G. U.[1,2]

केनचिदारूप्यते। तत्र गुरुणाकृष्यमाणेपि तेनोक्तः सन्नारोहेन्न त्वनौचित्यभयान्नारोहे-दिति । कटो वीरणनिर्मिता शय्या । तत्र गुरुणोक्तः सन्नहासीत । उत्सवादावेष आचारः । स्वस्तरो नाम पलालशय्या । 'नवस्वस्तरे संविशन्तीतिदर्शनात् । तत्रापि गुरुणोक्तः सन्सहासनादि कुर्यात् ॥

१५ व्युपतोदोऽङ्गुल्यादिना वहन यदाभिमुख्यार्थं क्रियते । व्युपजावः कर्णयोर्मुहु-र्मुहुर्जल्पनम् । वकारश्छान्दसोपपाठो वा । व्यभिहास आभिमुख्येन हसनम् । उदा-मन्त्रणमुचैः सम्बोधनं यथा वधिरं प्रति । नामधेयग्रहणं दशम्या पितृविहितस्य नाम-धेयस्य ग्रहणं न पूज्यनाम्नो भगवदादेः । प्रेषणमाज्ञापनम् । एतानि गुरुविषये न कर्तव्यानि । इतिकरणादेवमादीनामन्येषामपि प्रतिषेधः । ......... ॥

१६. आपदि व्युपतोदादिभिरप्यर्थमभिप्रेतं ज्ञापयेदसति पुरुषान्तरे वचनेनापि बोधयेद्यथा शूलतोदो मे भवति स चाग्निना शाम्यति न चात्र कश्चित्संनिहितः किं करोमि मन्दभाग्य इति । उत्तरे सूत्रे समावृत्तविषये ॥

१७. सहैकस्मिन्ग्रामे वसन्सायंप्रातरनाहूतोपि गुरुसदर्शनार्थो नान्यप्रयोजनो गच्छेत् ॥

१९. आचार्यस्याचार्यः प्राचार्यः 'प्रपितामह'वत् । यदाचार्यस्य प्राचार्यस्य कार्य-वशात्संनिपातो मेलनं भवति तदा प्राचार्याय । द्वितीयार्थे चतुर्थी । प्राचार्यं पूर्व-मुपसंगृह्य पश्चात्स्वाचार्यमुपसंग्रहीतुमिच्छेन्न केवलं मनसा किंतु यथाचार्यो जानाति मामयमुपसंजिघृक्षतीति तथा चेष्टेत । अन्यथादृष्टार्थमुपदिष्टं स्यात् ॥

२०. इतर आचार्यः प्रतिषेधेद्वत्स मा मोपसंग्रहीरिति ॥

२१. अस्य प्राचार्यस्य संनिधावस्याचार्यस्य पूजा लुप्यते न कार्या । न केवलमुपसंग्रहणमेव । उत्तरसूत्रं समावृत्तविषयम् ॥

२२. मुहुश्चेत्यनुस्वारदीर्घौ छान्दसौ । वीप्सालोपश्चात्र द्रष्टव्यः । मुहु-र्मुहुरिति विवक्षितम् । ग्रामान्तरे वसन्नपि मुहुर्मुहुराचार्यकुलं दर्शनार्थो गच्छेद्यथा-शक्ति गोरसाद्यपूपाद्यधिहस्त्यं हस्तेनाप्यमादाय स्वयमेव गृहीत्वेत्यर्थः । अपि-शब्दोभावे विधिं द्योतयति । गोरसाद्यभावे दन्तकाष्ठान्यपीति । इतिशब्दोन्तेवासि-धर्माणां समाप्तिद्योतनार्थः ॥

२४. एवं शिष्यं पुत्रमिवास्याभ्युदयः स्यादित्यनुकाङ्क्षन्सर्वेषु धर्मेषु किंचिदप्यनप-च्छादयमानोयुक्तः सुयुक्तः शुश्रूवद्विद्यस्तत्परो भूत्वा विद्यां ग्राहयेत् ॥

२५. न चैनं शिष्यमध्ययनविघ्नेनात्मप्रयोजनेषूपरुन्ध्यात् । उपरोधः स्वतन्त्रीकरणम् । अनापत्स्विति वचनादापद्यध्ययनविघ्नेनाप्युपरोधे न दोषः ॥

२६. आपद्यमान इत्यन्तर्भावितण्यन्तार्थः । योन्तेवासी विनिहितात्मा द्वयोराचार्ययोर्द्विविधं निहितात्मा सन्गुरावनैपुणमापादयति नानेनायं प्रदेशः सम्यगुक्त इति सोन्तेवासी न भवति स त्याज्य इत्यर्थः । अपर आह । योन्तेवासी वाङ्मनःकायकर्मभिरनैपुणमापद्यमानो गुरौ विसदृशं निहितात्मा भवत्यनुरूपं न शुश्रूषते सोन्तेवासी न भवतीति ॥

२७. आचार्योप्यनाचार्यो भवतीति त्याज्य इत्यर्थः । किं कुर्वन् । श्रुतात्परिहरमाणस्तेन तेन व्याजेन विद्याप्रदानमकुर्वन् ॥

२९. अभित्रासो भयोत्पादनम् । उपवासो भोजनलोपः । उदकोपस्पर्शनं शीतोदकस्नापनम् । अदर्शनं यथासावात्मानं न पश्यति तथा करणं गृहप्रवेशनिषेधः । सर्वत्र ण्यन्तात्प्रत्ययः । इत्येते दण्डाः शिष्यस्य यथामात्रं यावत्यपराधमात्रा तदनुरूपं व्यस्ताः समस्ताश्चानिवृत्तेर्यावदसौ ततोपराधान्निवर्तते तावदेते दण्डाः ॥

३०. एवं चरितब्रह्मचर्यं निवृत्तं गुरुकुलात्कृतसमावर्तनमित्यर्थः । एवंभूतमेनमन्येभ्यो धर्मेभ्यो यममवाश्रमं प्रतिवत्स्यते तत्र तेभ्यो धर्मेभ्योनन्तरो भवति तेभ्यो यथा त्वमन्तरितो न भवसि तथा भवेत्युक्त्वातिसृजेत्तमाश्रमं प्रतिपत्तुमुत्सृजेत् ॥

---

## PAṬALA III, KAṆḌIKĀ 9.

१. एवमध्येतुरध्यापयितुश्च धर्मा उक्ताः । अथ देशकालकृतधर्मा उच्यन्ते ।

मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते ।
चान्द्रमासास्तत्तदन्त्याश्चैत्राद्या द्वादश स्मृताः ॥
तेषु या या पौर्णमासी सा सा चैत्रादिका स्मृता ।
कादाचित्केन योगेन नक्षत्रस्येति निर्णयः ॥

तदेवं सिंहस्थिते सवितरि यामावास्या तदन्ते चान्द्रमासे या मध्यवर्तिनी पौर्णमासी सा श्रावणी । श्रवणयोगस्तु भवतु मा वा । तस्यां श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य गृह्योक्तेन विधिनोपाकर्म कृत्वा स्वाध्यायमधीयीतार्धायानश्च

मासमेकं प्रदोषे प्रथमे रात्रिभागे नाधीयीत ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात् । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोषः ॥

२. तिष्यः पुष्यः । तेन युक्ता पौर्णमासी तैषी 'श्रावणीवत्' । तस्यां विरमेदुत्सर्जनं कुर्यात् । तस्यापि प्रयोगो गृह्य एवोक्तः । रोहिण्यां वा तैषे मासि तिष्यात्पूर्वा या रोहिणी तस्या वा विरमेत् । अनयोः पक्षयोः पञ्च मासानधीयीत ॥

३. अर्धं पञ्चमं येषां तेऽर्धपञ्चमाः । अर्धाधिकांश्चतुरो मासानधीयीतेत्यपेक्ष्यत इत्येके मन्यन्ते । अस्मिन्पक्षे प्रौष्ठपद्यामुपाकरणम् । शास्त्रान्तरदर्शनादुत्सर्जनस्य वापकर्षः । उत्सर्जने च कृते श्रावण्याः प्राक् शुक्लपक्षेषु धारणाध्ययनं वेदस्य । कृष्णपक्षेषु व्याकरणाद्यङ्गाध्ययनम् । पुनः श्रावण्यामुपाकृत्यागृहीतभागस्य ग्रहणाध्ययनमिति । प्रपञ्चितमेतद् गृह्ये ॥

४. निगमाश्चत्वरादिनिगमनमार्गाः । नियमेन गम्यत एष्विति । तेषु सर्वप्रकारमध्ययनं वर्जयेत् ॥

५. अनुडुत्संबन्धिना शकृत्पिण्डेनोपलिप्य निगमेऽप्यधीयीत ॥

६. ............ शम्याप्रासात् । पञ्चमीनिर्देशादर्वागिति गम्यते । शम्या क्षिप्ता यावति देशे पतति ततोऽर्वागिति............॥

७. यदा श्मशानं ग्रामतया क्षेत्रतया वाध्यवसितं स्वीकृतं भवति तदा नानध्यायः । अध्येतव्यमेव ॥

८. यदा तु तथाध्यवसितमपि श्मशानं ज्ञायतेयं स प्रदेश इति तदा तावत्येव प्रदेशे नाधीयीत । न शम्याप्रासात् ॥

९. शूद्रपतितसकाशेऽपि शम्याप्रासादर्वाङ् नाध्येयम् ॥

१३. यो वेदमध्येष्यमाणो मलवद्वाससा रजस्वलया संभाषितुमिच्छति स पूर्वं ब्राह्मणेन संभाष्य पश्चात्तया संभाष्य संभाषेत संभाष्य च पुनरपि ब्राह्मणेनैव संभाष्याधीयीत् । किमर्थं सति भवति । एवं तस्या मलवद्वाससः आगामिनी या प्रजा तस्या निःश्रेयसमभ्युदयो भवति । प्रजारूपं वा निःश्रेयसं तस्या भवति । प्रजानिःश्रेयसमितिवचनाद्विधवाभिः संभाषणे नैतत्कर्तव्यम् ।

१४–१९. अन्तः शवो यत्र ग्रामे तत्र नाध्येयम् । एतेनान्तश्चाण्डालमिति च

G U.[1,3].—निगमाश्चत्वरा॰. निगमनमार्गाः ( निगमननामद्वारनम् G. U.[1] )

व्याख्यातम् । चण्डाल एव चाण्डालः । उभयत्र प्रथमा सप्तम्यर्थेऽव्ययीभावो वा विभक्त्यर्थे द्रष्टव्यः ॥

१७. आरण्ये च यावति प्रदेशे शवश्चाण्डालो वा सदृश्यते तावत्यनध्यायः ॥

१८. बाह्या उग्रनिषादादयः परिपन्थिनस्तेषु च ग्राममागतेषु तदहरनध्यायः । तस्मिन्नहनि नाध्येतव्यम् ॥

१९. ये विद्याचरित्रादिभिर्महान्तः सन्तस्तेषु च ग्राममागतेषु तदहरनध्यायः ॥

२०. संधिः संध्या । तस्मिन्संधावनुस्तनिते मेघगर्जिते सति रात्रिमनध्यायः । सर्वां रात्रिं नाधीयीत । वर्षतोविद्‍मन्यस्मिन्नधिकं वक्ष्यति ॥

२१. अन्त्यो दीर्घः । उपान्त्यो ह्रस्वः । विपर्यासश्छान्दसोपपाठो वा । संधौ विद्युति सत्यां स्वप्नपर्यन्तां रात्रिमनध्यायः । न सर्वाम् । स्वप्नपर्यन्ता रात्रिः प्रहरावशिष्टा । एवं सायंसंध्यायामुक्तम् । प्रातःसंध्यायामाह ॥

२२. उपव्युपसुषःसमीपम् । तत्र विद्योतमाने विद्युति सत्यामपरेद्युः सप्रदोषमहरनध्यायः । प्रदोषादूर्ध्वमध्ययनम् । यावता कालेन शम्याप्रामादर्वागवस्थितां गां कृष्णामिति वा रोहिणीमिति वा विजानीयादेतस्मिन्काल उपव्युषं विद्योतमान इत्यन्वयः । रोहिणी गौरवर्णा । इतिशब्दप्रयोगे द्वितीया प्रयुज्यते । तत्रान्वयप्रकारश्चिन्त्यः ॥

२३. रात्रेस्तृतीयो भागः सर्वोपररात्रः । तस्य त्रेधा विभक्तस्याद्यौंशो महारात्रोन्योंशो [1]दह्नः । तस्मिन्दह्नेपररात्रे स्तनयित्नुना निमित्तेन सप्रदोपमहरनध्यायः ॥

२४. अर्धरात्रादूर्ध्वमनन्तरोक्तो विधिरित्येके मन्यन्ते । स्वपक्षस्तु दह्न एवेति ॥

२५. दस्युप्रभृतिभिरवरुद्धासु गोषु तावन्तं कालमनध्यायः । अवरोधो ग्रामान्निर्गमननिरोधः ॥

२६. वधार्हाणां चोरादीनामवरोधे यावता कालेन हन्यन्ते तावन्तं कालमनध्यायः ॥

२८. ......... तासु च पूर्वेद्युश्चतुर्दशीषु च । .......... ॥

---

[1] विभक्तस्य द्व्यंशो मह [हा] रात्र. । अन्त्यो दहः । G U.[1]

## PAṬALA III., KAṆḌIKĀ 10.

१. चतुर्षु मासेषु भवश्चातुर्मास्यः । संज्ञा चैषा तिसृणां पौर्णमासीनां यासु चातुर्मास्यानि क्रियन्ते । काः पुनस्ताः । फाल्गुन्याषाढीकार्तिक्यः । "चतुर्मासाण्ण्यो यज्ञे तत्र भव इति वर्तमाने संज्ञायामणित्यण्प्रत्ययः[1]" [महाभाष्ये, २, पृ. ३६१] । तासु च चातुर्मासीषु पूर्ववद् द्वावहोरात्रावनध्यायः । ........... ॥

२. विरमणमुत्सर्जनं तदेव वैरमणं तस्मिन्वैरमणे । प्रथमान्तपाठे सप्तम्यर्थे प्रथमा । गुरुषु श्वशुरादिषु संस्थितेष्विति प्रकरणाद्गम्यते । अष्टकैवाष्टाक्यम् । स्वार्थे ष्यञ् । आदौ प्राप्ता वृद्धिर्मध्ये कृता । उपाकरणमेवौपाकरणम् । एतेषु निमित्तेषु त्र्यहा अध्ययनरहिताः । तत्र गुरुषु मरणदिनादारभ्य त्र्यहा इतरेषु पूर्वेद्युरपरेद्युस्तस्मिंश्च दिने नाधीयीत । ... ॥

३. संनिकृष्टा ये ज्ञातयो भ्रातृतत्पुत्रपितृव्यादयः । तेष्वपि मृतेषु त्र्यहमनध्यायः । ब्रह्मचारिणो विधिरयम् । आशौचवतां तु यावदाशौचमनध्यायः शास्त्रान्तरसिद्धः । .... ॥

४. मात्रादिषु मृतेषु द्वादशाहमनध्यायः । अयं विधिर्गृहस्थानामपि । केचिदाशौचमपि तावन्तं कालमिच्छन्ति । नेति वयम् । अनध्यायप्रकरणात् ॥

६. अनु पश्चाद्भूता जाता अनुभाविनो मृतापेक्षयावरवयसः । ........... अन्ये तु शावं दुःखमनुभवतां सर्वेषां परिवापनमिच्छन्ति । अपर आह । अनुभाविन उदकार्हास्तेषां मरणे परिवापनमिति ॥

७. .......... विहारो यज्ञदीक्षा । ........... स्वमतं तु वपेरन्नेवेति ॥

१०. आचार्ये संस्थिते त्रीनहोरात्रानध्ययनं वर्जयेदित्येके । स्वपक्षस्तु द्वादशाहः पूर्वोक्तः ॥

११. श्रोत्रियं वक्ष्यति । तस्य संस्थायामपरिपूर्णसंवत्सरायां श्रुतायामेकां रात्रिमेकमहोरात्रमध्ययनं वर्जयेत् । अत्र संस्थाश्रवणाद् गुर्वादिष्वपि सैव निमित्तम् ॥

१२. एके तु सब्रह्मचारिणो मरण एवानन्तरोक्तमनध्यायमिच्छन्ति न तु श्रोत्रियसामान्यमरणे ॥

C

[1] चातुर्मास्यो ज्ञेय । तत्र भव इति वर्तमाने सज्ञायामित्यणूप्रत्ययः G. U.[1]; चातुर्मास्य यज्ञः तत्र भव इति वर्तमाने सज्ञायामणिप्रत्ययः । G. U.[2].

१७. उभयतोध्ययनस्यादावन्ते चोपसग्रहण कर्तव्य यथाक्रममध्येतुकामस्यादावधीत्यान्ते ॥

१८ बहुवचनमतन्त्रम् । अधीयानेषु यत्रान्यो व्यवेयादन्तरागच्छेत्तत्राप्यधीहि भो इत्येतमेव शब्दमुत्सृज्योचार्याधीयीत । प्रत्येकमुपदेशादेकवचनम् । अधीयीरन् ।

१९ शुना च गर्दभाना च बहूना नादा' बहुवचननिर्देशात् । सलावृकी वृकजातावान्तरभेदः । क्रौष्ट्रीत्यन्ये । लिङ्गस्याविवक्षितत्वात्पुंसोपि ग्रहणम् । 'इन्द्रो यतीन्सालावृकेभ्य' इत्यादौ दर्शनात्सर्वत्रादिमः स्वरो दीर्घः । स एवाय ह्रस्वः प्रयुक्त. । एकसृक एकचरः शृगालः । अनध्यायस्य हेतवः ॥

२०. वेदान्तरसकाशे साम नाध्येयम् । ॥

२१. आक्रोशपरीहासादिषु सर्वेषु शब्दकर्मस्वनध्यायो यत्राध्ययनशब्देन ते ससृज्येरन् ॥

२५ यत्पक कालपाकेनाम्ल जात तच्छुक्तम् । तद्भुक्त यथावता कालेनात्मसयुक्त स्वोदरस्थमजीर्णं यावत्तदनुगुण उद्गारस्तावदनध्यायहेतुः ॥

२६ तेनाधीत्यैव भुञ्जीत ॥

२८ यो मृतोसपिण्डीकृतः स प्रेतः । . .. ॥

---

## PATALA III, KANDIKĀ 11

१ काण्डोपकरण काण्डव्रतादेशनम् । तस्मिन्नहन्यमातृकस्यान्न भुक्त्वा सप्रदोषमहरनध्यायः । अपर आह । भुक्त्वेति नानुवर्तते । तथा चोत्तरत्र भुक्त्वाग्रहणम् । काण्डोपकरणे निमित्तेमातृकस्य माणवकस्य सप्रदोपमहरनध्याय इति । एतेनोत्तर व्याख्यातम् ॥

२ काण्डसमापन व्रतविसर्ग. ॥

३. ये मनुष्या भूत्वा प्रकृष्टेन तपसा देवा' सपन्नास्ते मनुष्यप्रकृतयो देवा । नन्दीश्वरकुबेरादयः[1] । तेपा यत्र तत्प्रीत्यर्थे ब्राह्मणभोजने भुक्त्वा सप्रदोपमहरनध्याय इत्येके मन्यन्ते । मनुष्ययुरोषु[2] देवेष्विज्यमानेष्वित्यन्ये ॥

४ 'प्रेतसक्लृप्त चान्न'मित्यस्यापवादः । पर्युषिता रात्र्यन्तरिताः । प्रतिगृहीतेषु

---

[1] °कुमारादय G U[1] — [2] मनुष्यमुखेन G U[1]

तण्डुलेष्वय पक्त्वा भुज्यमानेषु नानध्यायः । तयामप्रांसेन तदहर्भक्षितेनापि नानध्यायः । पर्युषितेनेत्येके । पर्युषितैरितिवचनात्तदहर्भक्षितैः सप्रदीपमहरनध्यायः ॥

५. ओषधिग्रहणेन वीरुधोपि गृह्यन्ते । वनस्पतिग्रहणेन वृक्षमात्रम् । तेषां मूलैः सूरणकन्दादिभिः फलैश्चाम्रादिभिः पर्कैरपक्कैश्च तदहर्भक्षितैरपि नानध्यायः ॥

६. यस्मिन्नहनि काण्डमुपाकृतं न तत्तदहरधीयीत । तथा श्रावण्यां पौर्णमास्यामुपाकृत्य प्रमत्तेहन्यन्तरे यस्य काण्डस्यानुवाक्यमध्येतुमारम्भं कुर्वीत न तत्तदहरधीयीत । अहरित्यहोरात्रोपलक्षणम् ॥

७. अनेकवेदाध्यायी यदैकस्य वेदस्य पारायणं कुरुते तदा तस्य पारायणस्य ये उपाकरणोत्सर्जने तयोः कृतयोस्तां विद्यां तदहर्नाधीयीत । एतदेव ज्ञापकं पारायणस्याप्युपाकरणोत्सर्जने भवत इति । तां विद्यामितिवचनाद्विद्यान्तराध्ययने न दोषः ॥

८. घोषवान्कर्णश्रावः । भूमाववस्थितानि तृणानि भंवहत्युत्क्षिप्य गमयतीति तृणसंवाहः । वर्षति वा देवे धाराः प्रवहेद्विक्षिपेत् । यत्र देश एवंविधो वायुस्तत्र तावन्तं कालं नाधीयीत ।........ ॥

११. यदा सहाधीयानाः कारणवशाद्विप्रवसेयुः केचिच्चाचार्येण संगतास्तदा समध्ययनं सहाधीयमानं प्रदेशं तदहर्नाधीयीत । विप्रोषितानां यदहः पुनर्मेलनं तदहर्नाधीयीतेत्यन्ये ॥

१८. विवृतद्वारमपावृतम् । तत्र नक्तं नाधीयीत ॥

२०. वासन्तिको वसन्तोत्सवः । स च चैत्रमासे शुक्लत्रयोदश्यां भवति । आषाढशब्देनापि तस्मिन्मासे क्रियमाणस्तादृशः कश्चिदिन्द्रोत्सवादिर्विवक्षितः । तयोस्तदहरनुवाकाध्ययनमविहितम् । अनुवाकग्रहणान्न्यूने न दोषः । अपर आह । अनुवाकग्रहणान्मन्त्रब्राह्मणयोरेव प्रतिषेधो नाङ्गानामिति ॥

२१. नित्यं प्रश्नाध्ययनं यत्र न नित्यप्रश्नो ब्रह्मयज्ञः । तस्य चाविधिना वक्ष्यमाणेन प्रकारेण विनानुवाकाध्ययनमविहितम् । यद्यपि नित्यं ब्रह्मयज्ञाध्ययनं तथापि केनचिदङ्गेन विना न कर्तव्यम् । तेन विस्मृत्य प्रातराशे कृते प्रायश्चित्तमेव न न ब्रह्मयज्ञः । ........... ॥

२३. ........... आदित आरभ्य प्रथमादिष्वहस्स्वधीतं यत्तद् द्वितीयादिष्वहःसूत्सृज्य ततः परमधीयीत । वाचोच्चैरित्यर्थः ॥

२५. विद्युत्यभ्यग्रायामविरतायाम् । स्तनयित्नौ चाभ्यग्रे । ........... ॥

२९. ............ आकालमनध्यायः पुरेद्युरा तस्य कालस्य प्राप्तेरित्यर्थः ॥

३०. ............ अपस्वाने निर्घाते । ......... अग्न्युत्पाते ग्रामादिदाहे । ....... .. सार्वकालिकमृतौ चापर्तौ च । ... ... .. । अत्र मर्वासामिति-वचनादन्यत्र वेदानामेव प्रतिषेधः । अङ्गानामपीत्यन्ये ॥

३१. अपर्ताविभ्रे दृश्यमान यावद् दृश्यते तावत्कालमनध्यायः । एवं परिवेषादिष्वपि योज्यम् । अत्रापि बृहस्पत्यादिपरिवेषे न दोषः । इन्द्रधनुः प्रसिद्धम् । सूर्यसमीपे तदाकृतिः प्रतिसूर्यः । मत्स्यः पुच्छवन्नक्षत्रम् । समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्ययः । सर्वेष्वेतेषु वातादिषु च त्रिषु तावत्कालमनध्यायः । वाते घोषवति पूतिगन्धे दुर्गन्धे । नीहारे हिमान्याम् । वातादिग्रहण पूर्वोक्ताना श्रृगर्दभादीनामुपलक्षणार्थम् । पुनरिह विधान तावत्कालमिति विधातुम । अत्रैव श्रृगर्दभादि-ग्रहणे कर्तव्ये पूर्वस्य पाठस्य चिन्त्य प्रयोजनम् ॥

३५. उत्सर्जनादूर्ध्वमुपाकरणादर्वागपर्तुः । तत्रच्छन्दसोननूक्तमशगपूर्वं नाधीयीत । ग्रहणाध्ययनमपर्तौ न कर्तव्यम् । यद्यपि 'तैष्या पौर्णमास्या रोहिण्यां वा विरमे'दित्युक्तं तथापि कियन्तं काल तद्विरमणं कस्माद्वानध्ययनादित्यपेक्षायामुच्यते । एतावन्तं काल ग्रहणाध्ययन न कर्तव्यम् । धारणाध्ययने न दोषः । तथा छन्दस इतिवचनादङ्गानां ग्रहणाध्ययनेपि न दोषः ॥

३६. प्रदोषे चाननूक्तमृतावपि नाधीयीत । मासं प्रदोषे नाधीयीतेत्येतत्तु धारणाध्ययनस्यापि प्रतिषेधार्थम् । अपर आह । यस्या रात्रौ द्वादशी त्रयोदशी च मिश्रे भवतस्तस्या प्रदोषे नाधीयीताननूक्तमनूक्त चर्तावपर्तौ च । एष आचार इति ॥

३७. आम्नातमधीतं तत्सार्वकालिकमपर्तौ प्रदोषे च सर्वस्मिन्कालेध्येयम्[1] ॥

३८. अत एतस्मादनध्यायप्रकरणादन्यदनध्यायनिमित्तं परिषत्सु मानवादिषु धर्मशास्त्रेषु यथोक्त तथा द्रष्टव्यम् । ............ ॥

## PAṬALA IV., KANDIKĀ 12.

१. ............ तपो यावत्फल साधयति स तावत्साधयतीत्यर्थ ॥

२. तत्रैव ब्राह्मणे । 'स यदि तिष्ठ'न्नित्यापस्तम्बः श्रूयते । तत्र दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीत [ तैत्तिरीयारण्यके

[1] काले माध्येयम् Dev MSS

२, ११, ३. ] इत्यादिर्मुख्यः कल्पो ब्राह्मण एवोक्तः । इह पुनरासीनवचनं यथाकथंचिदासनार्थम् । सर्वथाप्यधीयानस्त एव तत्तप्यत इति ब्राह्मणार्थः।........॥

३. अथाप्यपि च । स्वाध्यायो नाम यदेष ब्रह्मयज्ञः । ब्रह्म वेदस्तत्साधनो यागो यथा दर्शपूर्णमासादयः पुरोडाशादिसाधनाः । हवैशब्दौ प्रसिद्धिं द्योतयतः । तस्य यज्ञस्यैते स्तनयित्न्वादयो वषट्काराः । बहुवचननिर्देशाद्वषट्कारानुवषट्कारस्वाहाकाराः सर्वे प्रदानार्था गृह्यन्ते । स्तननं मेघशब्दः । विद्योतनं विद्युद्व्यापारः । अवस्फूर्जनमशनिनिपातः । तत्रावस्फूर्जथुः पुल्लिङ्गमिति दर्शनात् । वायतीति । ओवै शोषण इत्यस्य रूपम् । यथार्द्रप्रदेशः शुष्को भवति तथा वातीत्यर्थः । यस्मादेते वषट्कारास्तस्मात्स्तननादिष्वनध्यायनिमित्तेषु सत्स्वप्यधीयीतैव । न पुनरनध्याय इति नाधीयीत । किमर्थम् । वषट्काराणामेतेषामच्छम्बट्करायाव्यर्थत्वायान्यथा वषट्कारा एते व्यर्थाः स्युः । ततश्च यथा होत्रा वषट्कृतेऽध्वर्युर्जुहुयात्तादृगेव तत्स्यात् ॥

४. तस्य वाजसनेयिब्राह्मणस्य शाखान्तरे वाक्यसमाप्तिर्भवति न तावति पर्यवसानम् । एतदेव शाखान्तरं पठति ॥

५. अन्त इतिशब्दोऽध्याहार्यः । वातादिषु सत्सु प्राप्ते प्रदेश ऋग्वेदाध्ययन एकामृचमधीयीत यजुर्वेदाध्ययन एकं यजुः सामवेदाध्ययन एकं साम सर्वेषु वा वेदेषु भूर्भुवःसुवरित्यादिकं यजुरिति व्याहरेत्र पुनर्यथापूर्वं प्रश्नमात्रम् । तेनैतावतैवास्याध्येतुस्तदहस्तस्मिन्नहनि स्वाध्याय उपात्तो भवति स्वीकृतो भवतीत्यर्थः । अधीतो भवति यावत् । केचिद्भूर्भुवःसुवरित्यादिकं ब्राह्मणभागाध्ययनविषयं मन्यन्ते न सार्वत्रिकम् । कस्मात्पुनर्वाजसनेयिब्राह्मणस्योदाहृते शाखान्तरे वाक्यसमाप्तिराश्रीयते न पुनर्यथाश्रुतमात्रं गृह्यते तत्राह ॥

६. एवमित्यादि ॥ एवं वाक्यसमाप्तावाश्रीयमाणाचार्यसमयेन । आर्याः शिष्टा मन्वादयः । तेषां समयो व्यवस्था । तेनाविप्रतिषिद्धं भवति । इतरथा विप्रतिषिद्धं स्यात् । कथम् ॥

७. आर्या ह्यध्यायमनध्यायं चोपदिशन्ति । तदुपदेशमनर्थकं स्याद्यदि वाजसनेयिब्राह्मणं यथाश्रुतमवेक्षेताध्येता ॥

८. नन्वनर्थकमेव तदस्तु श्रुतिविरोधात् । तत्राह । आर्येति ॥ योयमध्यायानध्यायविषय आर्यसमयो न तत्र किञ्चित्कारणं गृह्यते यथा "वैमर्जनहोमीयं वासोऽध्वर्यवे ददाति" त्यत्रागृह्यमाणकारणश्चार्यसमयः श्रुत्यनुमानद्वारेण प्रमाणमतो वाक्य-

परिसमाप्तिरेव युक्ता । एवं हि वाजसनेयिब्राह्मणस्यापि नात्यन्तबाधः । अनध्यायोपदेशस्यापि प्रभूताध्ययनविषयतयार्थवत्त्वमिति । सूत्रेगृह्यमानकारण इति णत्वाभावश्छान्दसः । का पुनरसौ स्मृतिर्या ब्रह्मयज्ञेप्यनध्यायमुपदिशति । मानवे तावद्विपर्ययः श्रूयते । "नैत्यके नास्त्यनध्यायो ब्रह्मसत्र हि तत्स्मृत" [२, १०६]-मितिसामान्येनानध्यायोपदेशस्तु ब्रह्मयज्ञादन्यत्र चरितार्थस्तस्मात्तादृशी स्मृतिर्मृग्या ॥

९. एवं तर्ह्यग्निहोत्रादिष्वपि मन्त्राणामनध्यायः प्राप्नोति । नेत्याह । विद्यामिति । विद्या वेदनमध्ययनं ता प्रत्यनध्यायः श्रूयते न पुनर्मन्त्राणां कर्मयोगे । कुतः परिभाषायामुक्तोर्थान्तरत्वादिति । अर्थान्तरं हि कर्मणि प्रयोगो मन्त्राणा पुनर्ग्रहणाध्ययनम् । पारायणाध्ययनमध्येनध्यायागमो भवति न वेति चिन्त्यम् । एवं रुद्रादिजपेपि ॥

१०. कथं पुनरार्यसमयः प्रमाणं यावता न तेपामतीन्द्रियेर्थे ज्ञानं संभवति । तत्राह । ब्राह्मणोक्ता इत्यादि ॥ विधीयन्त इति विधयः कर्माणि । ते सर्वे स्मार्ता अपि ब्राह्मणेष्वेवोक्ताः । नन्विदानीं ब्राह्मणानि नोपलभ्यन्ते । सत्यम् । तेषामुत्सन्नाः पाठा अध्येतृदौर्बल्यात् । कथं तर्हि तेपामस्तित्वम् । प्रयोगादित्यादि ॥ प्रयोगः स्मृतिनिबन्धनमनुष्ठानं च । तस्माद् ब्राह्मणान्यनुमीयन्ते मन्वादिभिरुपलब्धानीति । कथमन्यथा स्मरेयुरनुतिष्ठेयुर्वा । संभवति च तेपां वेदसंयोगः ॥

११. अथ प्रसङ्गादपस्मृतिरुच्यते । यत्रेत्यादि ॥ यत्र पितृष्वसृसुतामातुलसुतापरिणयनादौ प्रीत्युपलब्धितः प्रवृत्तिर्न तत्रोत्सन्नपाठं शास्त्रमनुमीयते प्रीतेरेव प्रवृत्तिहेतोः संभवात् ॥

१२. .........राध्यति कल्पते ॥

१३. एवं स्मृत्याचारप्राप्तानां श्रुतिमूलत्वमुक्तम् । अथेदानीं प्रत्यक्षब्राह्मणोक्ता एव केचिद्विधयो व्याख्यायन्ते तेपामपि स्मार्तेष्वनुप्रवेशार्थम् । तेन तदतिक्रमे स्मार्तातिक्रमनिमित्तमेव प्रायश्चित्तं भवति ॥

१४. .........संस्तुतिग्रहणेन संस्तुतिमात्रमिदं नामधेयं न धर्मातिदेशार्थमिति दर्शयति । ........... ॥

---

## PAṬALA IV, KAṆḌIKĀ 13

१. ...........केचिदाहुः । आक्राद्यादितिवचनादशनीयाभावेन भोजनलोपेपि

यथाकथंचिद्वैश्वदेवं कर्तव्यं पुरुषसंस्कारत्वादिति । अपरे त्वशनविसंस्कार इति वदन्तो भोजनलोपे वैश्वदेवं न कर्तव्यमिति । ....... ॥

५. समावृत्तं शिष्यं प्रत्याचार्येण समादेशो न देय इदं त्वया कर्तव्यमिति यथासमावृत्तदशायामाज्ञा दीयते । उदकुम्भमाहरेति । नैवमिदानीं स्वेच्छया करणे प्रतिपत्तव्यम् ॥

७. अध्ययनेनुपयुक्ता कथा विकथा । तां चान्यां कृत्वैतदादि प्रतिपद्येत । एवं सति ब्रह्म वेदो लौकिक्या वाचा व्यावर्तते तया मिश्रं न भवति ।

८. यज्ञेषु दर्शपूर्णमासादिष्वेतदादय ओंकारादयः प्रसवा निर्देशा अनुज्ञावाक्यानि भवन्ति ब्रह्मादीनाम् । ओं प्रणय । ओं निर्वप । ओं स्तुध्वमिति ॥

९. ... .. ... । भूतिकर्मसु पाणिग्रहणादिषु । . ...... ॥

१०. समयः शुश्रूषा । तेन विना कृच्छ्रं दुःखं दुरवधारणमपूर्वं ग्रन्थं न कुर्वीत । क्रियासामान्यवचनः करोतिरध्ययनेध्यापने च वर्तते । समयेन विना शिष्योपि कृच्छ्रं ग्रन्थं नाधीयीताचार्योपि नाध्यापयेत् । ........ ॥

११. विचिकित्सा संशयस्तदभावोविचिकित्सा । सा यावदुत्पद्यते तावद् ब्रह्म नियन्तव्यं नियमेनाधिगन्तव्यं । नियमपूर्वकमधिगन्तव्यमिति हारीत आचार्यो मन्यते । अस्मिन्पक्षे त्रिःश्रावणत्रिःसहवचनयोरपि शुश्रूषितव्यम् । ब्रह्मग्रहणादङ्गेषु नायं विधिः ॥

१२. बहिर्वेदे वेदाद्बहिर्भूते काव्यनाटकश्रवणे गतिः शुश्रूषा न विद्यते यद्यपि तदुपयुक्तं वेदार्थज्ञाने ॥

१५. यद्यप्यमानर्हन्भवति तथाप्याचार्ये या गतिः शुश्रूषा सा तस्मिन्न कर्तव्या॥

१६. बुद्धार्थे । वृद्धानां चान्तेवासिनां न गतिर्विद्यते । पूर्ववयसान्तेवासिनावरवया आचार्यो न शुश्रूषितव्यः । अध्ययनादूर्ध्वमित्येके । अध्ययनकालेपीत्यन्ये ॥

१७. यदा ब्रह्मणि वेदविषये मिथो विनियोगः क्रियते । बह्वृचो यजुर्वेदाध्यायिनः सकाशाद्यजुर्वेदमधीते सोपि तस्माद्बह्वृचं । तदा परस्परं शुश्रूषा न कर्तव्या ॥

१८. अत्र हेतुं स्वयमाह ब्रह्मेत्यादि ॥ तत्र द्वयोरपि ब्रह्म वर्धते सैव ब्रह्मवृद्धिः शुश्रूषेत्युपदिशन्त्याचार्याः ॥

१९. ...... । निवेशे वृत्ते दारकर्मणि वृत्तेपि । ........... ॥

२०. तत्र हेतुत्वेन श्वेतकेतोरेव शिष्यान्प्रति वचनम् । ........ ॥

२२. .............. । नैयमिकानि नियमेन कर्तव्यानि नित्यकर्माणि ।.... ॥

---

## PATALA IV. KANDIKĀ 14

१. कानि पुनस्तानि ।........ ॥

२. एवंविधं श्राद्धादि। एवमेतैः कर्मभिरहरहराक्रान्तस्य न शिरःकण्डूयनेऽप्यवसरो भवति । स कथं द्वौ द्वौ मासौ गुरुकुले वसेदिति ॥

३. ......... । चशब्दोऽवधारणे ।... . ॥

४. चणिति निपातोऽस्ति । निपातैर्यद्यदिहन्तकुविन्नेच्चेचण्कच्चिद्यत्र युक्तमिति [ पा० ८, १, ३० ] स चेदर्थे वर्तते । "इन्द्रश्च मृळयाति न" इत्यादौ [ ऋग्वे० २, ४१, ११ ] दर्शनात् । तस्यायं प्रयोगः । न चेदस्मिन्माणवके दोषमनध्याप्यताहेतुकं पश्येत् ॥

५. समानमधीयानेषु माणवकेषु यदि कस्यचिद्यदृच्छया दृष्टहेतुमन्तरेण बुद्धिमान्द्यादिनाध्ययनस्यासंवृत्तिः स्यादधीतो भागो माणवकान्तरवन्नागच्छेत्तदा तस्यां यदृच्छायामसंवृत्तौ तस्मिन्नाचार्ये गतिरेव शुश्रूषैव माणवकस्य शरणम् ॥ तथा च मनुः [ २, २१५ ] । अधिकं शुश्रूषितो हि गुरुः सर्वात्मना तं शिक्षयेदिति ॥

६. मातृग्रहणेन पितामहीप्रपितामह्योरपि ग्रहणम् । पितृग्रहणेन पितामहप्रपितामहयोरपि ग्रहणम् । सर्वे एत आचार्यवच्छुश्रूषयितव्याः ॥

७. उक्ताश्चानुक्ताश्च ज्येष्ठमातुलादयः सर्वे गुरवः समावृत्तेनाहरहरुपसंग्राह्याः ॥

८. यदि प्रोष्य समागतो भवति गुरवो वा प्रोष्य समागताः । ....... ॥

९. भ्रातृग्रहणे पूर्वेणैव सिद्धे क्रमार्थं वचनं यथापूर्वं ज्येष्ठक्रमेणेति ॥

१०. पूजा वर्णज्यायसां कार्या वृद्धतराणां चेत्युपदेशानुरोधेन [१,१३,२,] या नित्या पूजा सा च यथापूर्वं वृद्धक्रमेण ॥

१२. ........ विद्याचारित्राद्यपेक्षया विकल्पः ॥

१३. ...पुरे भवं पौरम् । पौरं च तत्सख्यं च पौरसख्यं सेवानिरन्धनं वान्धवम् । तदभिवादनस्य निमित्तम् । कीदृशं दशवर्षान्तरालम् । दशवर्षाधिकः पौरसखा श्रोत्रियोऽभिवाद्य इति विवक्षितम् । मध्यमित्युपममस्तमप्यपेक्ष्यते । चारणशब्दः शाखाध्यायिषु रूढः । तेषां सख्यं पञ्चवर्षमभिवादनस्य निमित्तम् ।

श्रोत्रियं वक्ष्यति । स त्रिवर्षपूर्वतामात्रेणाभिवादनमर्हति । न पूर्वसंस्तवमपेक्षते ॥

१४. क्रमार्थमिदम् । वयोविशेषे ज्ञायमाने पूर्वं वृद्धतरायाभिवाद्यमभिवादनं कर्तव्यं पश्चाद् वृद्धायेति ॥

१५. उच्चैःस्थाने नीचैःस्थाने वावस्थितो विषमगतः ।......गुरवे त्वभिवाद्यमेव दर्शने सति तूष्णीमवस्थानस्यायुक्तत्वात् ॥

१६. इदमगुरुविषयम् । यत्रासावभिवादनीयः स्थितस्तत्रान्वारुह्य वाभिवादयीताभिवादयेत् । अवरुह्येत्येतदपि द्रष्टव्यं न्यायस्य तुल्यत्वात् । गुरौ तु दृष्टमात्र एवाभिवादनमित्युक्तम् ॥

२१. पत्युर्यद्वयस्तदेव स्त्रीणां वयस्तेन तदनुरोधेन ज्येष्ठभार्यादिष्वभिवादनं कर्तव्यम् ॥

२२. अवहितपाणिः । समित्कुशादिहस्तो दात्रादिहस्तो वा । ........ ॥

२४. एते अपि द्वे सर्वनाम्नैवाभिवादयीत न नाम्नेत्येके मन्यन्ते । स्वमतं तु नाम्नैवेति ॥

२५. शिष्यं प्रत्याचार्यस्यायमुपदेशः । स्मशब्दः श्लोकपूरणार्थो निपातः । ....॥

२६. ब्राह्मणविषयमिदम् । ........ ॥

२८. अप्यनष्टपशुधनोसीति ॥

३०. ........अरण्यग्रहणं समयस्य देशस्योपलक्षणम् । ........संभाषणं मातृवद्भगिनीवच । भगिनि किं करवाणि ते न भेतव्यमिति ॥

---

## PAṬALA V., KANḌIKĀ 15.

१. .........वासोविन्यासविशेषो यज्ञोपवीतम् । दक्षिणं 'बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीत'मिति ब्राह्मणम् । [ तैत्तिरीयारण्यके २, १, ३. ] वाससोसंभवेनुकल्पं वक्ष्यति [ २, ४, २२ ] ........ ॥

३. यं वा प्रयतोन्य आचामयेत्सोपि प्रयतो भवति । सर्वथा स्वयं यामहस्तावर्जिताभिरद्भिराचमनं न भवति । तेन शास्त्रान्तरोक्तं कमण्डलुधारणमप्याचार्यस्यानभिमतं लक्ष्यते । अलाबुपात्रेण नारिकेलेन च स्वयमाचमनमाचरेदिति ॥

४. ........पिपासितस्य पाननिषेधायमिति केचित् । अपर आह । अस्मादेव

प्रतिषेधाच्छिक्यादिस्थस्य करकादेर्या धारा तत्र प्रायत्यार्थमाचमनं भवतीति ॥

५. भूमेः स्वयंदीर्णः प्रदेशः प्रदरः । ....... ॥

६. ... तप्ताभिरितिवचनाच्छृतशीताभिरदोषः । तथा चोष्णानामेव प्रतिषेधः स्मृतिषु प्रायेण भवति ॥

७. वय इति पक्षिनाम । यो रिक्तपाणिः सन् वयसः पक्षिण उद्दिश्य तेषां प्रोत्सारणाय पाणिमुद्यच्छते स तत्कृत्वाप उपस्पृशेत्तेनैव पाणिना । रिक्तपाणिरिति वचनात्काष्ठलोष्टादिसहितस्य पाणेरुद्यमने न दोषः । केचिदुपस्पर्शमाचमनमाहुः ॥

१०. येन प्रयतो भवति तत्प्रयमणमाचमनम् । करणे ल्युट् । ... ॥

११. तीरं उत्तीर्याचामेन्न जलमध्य इत्ययमर्थो न विधेयः पूर्वेण गतत्वात् । तस्मादयमर्थः । यदा नदीमुत्तरति नावा प्रकारान्तरेण वा तामुत्तीर्य तीरं गतः प्रयतोप्याचामेत् । नद्यादेरुत्तरणमप्याचमनस्य निमित्तमिति । तुशब्दोप्यर्थः ॥

१२. श्रौते स्मार्ते लौकिके वाग्नौ । केचिल्लौकिके नेच्छन्ति ॥

१३. ... यत्रातिश्लक्ष्णतया पलल्लादेर्मूलाग्रविभागो न ज्ञायते स मूढः । मूढश्चासौ स्वस्तरश्चेति मूढस्वस्तरस्तस्मिन्पतितादिष्वप्रयतेष्वासीनेषु यदि कश्चित्प्रयत उपविशेन्न च नान्मंस्पृशेत्तदा स प्रयतो मन्येत यथा प्रयत आत्मानं मन्यतेहं प्रयतोस्मीति तथैव मन्येत नैवंविधे विषये तत्स्पृष्टिन्यायः प्रवर्तते ॥

१४. तृणकाष्ठेष्वपि भूमौ निखातेषु तत्स्पृष्टिन्यायो न भवति ॥

१७. .. .. . व्यवस्थितविकल्पोयम् । "ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते तत्र स्नानविधिः प्रोक्तो ह्यधः प्रक्षालनं स्मृत"मिति मानवे दर्शनात् ॥

१८. .. . ..यावति देश ऊष्मोपलम्भो भवति । अत्राप्यशक्तौ न दोषः ॥

२०. अप्रयत इत्येव । एनमग्निमप्रयतो नोपधमेत् । प्रयतस्य न दोषः । "मुखेनोपधमेदग्निं मुखाद्ध्यग्निरजायत"ेति स्मृत्यन्तरे दर्शनात् । "नाग्निं मुखेनोपधमे"दिति मानवे दर्शनादुभयोर्विकल्पः । अपर आह । वाजसनेयके श्रौतप्रकरणे "मुखाद्ध्यग्निरजायत तस्मान्मुखेनोपसमिन्ध्या"दितिदर्शनाच्छ्रौतेषु मुखेनैवोपसमिन्धनमन्यत्र स्मार्ते प्रतिषेध इति । अन्ये तु वैणवेनायसेन वा सुषिरेणोपसमिन्धनमिच्छन्ति । एवमग्नेर्मुखव्यापारस्यान्वयाच्छ्रुतिरप्यनुगृहीता भवति । आस्यबिन्दूनां पतनशङ्काभावात्प्रतिषेधस्मृतिरपीति ॥

२१. खट्वायां खट्वाया अधोभूमि नोपदध्यात्। अत्राप्यशक्तौ न दोषः॥

२२. . प्रवसन प्रायस्य मूत्रपुरीषप्रक्षालनादीनि यत्राल्पाधीनानि। यत्र तु कूपेष्वेवोदकं तत्र बहूदकेपि न वस्तव्यम्। ब्राह्मणग्रहणाद्वर्णान्तरस्यानियमः। ग्रामग्रहणादेवभूतेषु घोषादिषु न वस्तव्यम्॥

---

## PATALA VII, KANDIKĀ 16

१. तिष्ठन्प्रह्वो वा नाचामेदिति नाय प्रतिषेधः शक्यो वक्तुम्। कथम्। आसीनस्त्रिराचामेदिति वक्ष्यति। ततो यथा शयानस्याचमनं न भवति तथा तिष्ठतः प्रह्वस्य च न भवति। एव तर्हि नाय शौचार्थस्याचमनस्य प्रतिषेधः। किं तर्हि। पानीयपानस्य प्रतिषेधः। तथा च गौतमः। "नाञ्जलिना पिबेन्न तिष्ठ"-न्निति। अपर आह। अस्मादेव प्रतिषेधात्क्वचित्तिष्ठतः प्रह्वस्याचमनमनुज्ञातं भवति। तेन भूमिगतास्वप्सु तीरस्यायोग्यत्व ऊरुदघ्ने नाभिदघ्ने वा जले स्थितस्याचमनं भवति। गौतमोपि 'न तिष्ठन्नुद्धृतोदकेनाचामे'दिति सूत्रेऽन्छेदनुद्धृतोदकेनैव तिष्ठतः प्रतिषेधमाह॥

२. द्वितीयार्थे तृतीया। अत्रानुक्त स्मृत्यन्तरवशादुपाश्रीयते। आसीनः शुचौ देशे नासने भोजनान्ते स्वासने दक्षिण बाहु जान्वन्तरा कृत्वा प्राङ्मुख उदङ्मुखो वा

हृदयगमा अपः करतलस्थिता यावतीषु माषो निमज्जते तावतीः फेनबुद्बुदरहिता वीक्षितास्त्रिराचामेदितिहेद् ब्राह्मणो हृदयंगमाः क्षत्रिया कण्ठगा वैश्यस्तालुगाः शूद्रो जिह्वास्पृष्टाः सकृत्।

५. मध्यमाभिस्तिसृभिरङ्गुलीभिरोष्ठौ॥

७. ... ... . उपस्पृशेदङ्गुलिभिः। सर्वेषामिन्द्रियाणां प्रसङ्गे परिसंचष्टे चक्षुषी नासिके श्रोत्रे चेति। इन्द्रियाणीतिवचन स्वरूपकथनमात्रम्। तत्राङ्गुष्ठानामिकाभ्यां चक्षुषी केचिद्युगपत्केचित्पृथक् पृथक्। अङ्गुष्ठप्रदेशिनीभ्यां नासिके। अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे। अत्र सहभावस्याशक्यत्वात्पृथगेव स्पृशेत्। अत्र पृथग्भावस्य निश्चितत्वात्पूर्वत्रापि पृथगेवेति युक्तमित्यन्ये॥

८. इन्द्रियस्पर्शनानन्तरं हस्तौ प्रक्षालयेत्॥

१०. दन्तमूलात्प्रभृत्योष्ठौ । तत्रालोमकः प्रदेशः श्यावः । तस्यान्तः सलोमकस्तत्पर्यन्तावोष्ठावुपस्पृश्याचामेत् । ओष्ठयोरलोमकं प्रदेशमङ्गुल्या काष्ठादिना चोपस्पृश्याचामेदिति ॥

११. .........अस्मादेव प्रतिषेधाज्ज्ञायते, यत्किंचिदपि द्रव्यमन्तरास्ये सदुच्छिष्टताया निमित्तमिति ॥

१२. भाषमाणस्यास्यात्पतन्तो ये लालाबिन्दव उपलभ्यन्ते चक्षुषा स्पर्शनेन वा य उपलब्धुं योग्यास्तेष्वाचमनं विहितम् ।.... ...॥

१४. स्वप्नः स्वापः क्षवथुः क्षुतं तयोः क्षुतयोः । शृङ्खाणिका नासिकामलम् । ............. लोहितस्य रुधिरस्य केशाना शिरोगतानां भूमिगतानां चाग्न्यादीनां च चतुर्णामालम्भे।........। नीवी प्रसिद्धा तद्योगादधोवासो लक्ष्यते। तच्च परिधायाप उपस्पृशेत् । केषुचित्स्नानं केषुचिदाचमनं केषुचित्स्पर्शमात्रं यावता प्रयतो मन्यते ॥

१५ आर्द्रं वा शकृदुपस्पृशेत् । ओषधीर्वा आर्द्रां भूमिं वा आर्द्राम् । पूर्वोक्तेष्वेव सर्वेषु वैकल्पिकमिदम्[1] ।........ ॥

१६. अग्निग्रहणं च क्षुरादेरप्युपलक्षणम् ॥

१७. अपूपग्रहणं मूलकन्दादेरप्युपलक्षणम् । द्वितीयार्थे षष्ठी ।.......॥

१८. यस्य कुले कश्चिन्म्रियेतासपिण्डताया सत्या तत्रानिर्गते दशाहे न भोक्तव्यम् । अनिर्दश इत्याशौचकालोपलक्षणं तेन क्षत्रियादिष्वधिकं पक्षिण्यादिषु च न्यूनम् ॥

१९. सूतिका प्रसूतिका तस्यामनुत्थितायाम् । उत्थानं नाम सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनम् । तच्च दशमेहनि भवति । दशम्यामुत्थितायामिति [ १९,८ ] गृह्य उक्तत्वात् । अत्राप्यशौचकालोपलक्षणत्वाद्यावदाशौचं तावदभोजनम् ।........... ॥

२०. ........... आचारस्तु धनुःशतादर्वाक्तत्रापि प्रदीपमारोप्योदकुम्भं चोपनिधाय भुञ्जते यदि समानवंशं गृहं न भवति ॥

२१. अप्रयतेनाशुचिनोपहृतं स्पृष्टमन्नमप्रयतं भवति किं त्वशुद्धमप्यभोज्यं न भवति । कः पुनरप्रयतस्य चाभोज्यस्य च विशेषः । उच्यते । अप्रयतमन्नमप्रावधि-

[1] 'पूर्वोक्तेषु सर्वेषु वैक' G. U[5]; पूर्वोक्तेष्वेव करुषेषु वै' G U[1].

शृतमद्भिश्च प्रोक्षितं भस्मना मृदा वा संसृष्टं वा वाचा वा प्रशस्तं प्रयतं भवति भोज्यं च। अभोज्यं तु लशुनादि कथंचिदपीति॥

२२. अप्रयतेन शूद्रेणोपहृतमानीतमन्नमभोज्यं स्पृष्टमस्पृष्टं च। स्पृष्टमेवेत्यन्ये॥

२३. ........एतच्च पाकदशायामेव पतितेन केशेन सह यत्पक्कमन्नं तद्विषयं भोजनकाले तु केशपाते घृतप्रक्षेपादिना संस्कृतं भोज्यम्॥

२५. अमेध्यैः कलञ्जपलाण्डादिभिरवमृष्टमभोज्यम्॥

२६. यस्मिंश्चान्ने स्यादिति [ १,१६,२३ ] व्यवहितमपि संबध्यते। ......

२७–२८. पूर्ववत्संबन्धः। मूषकला मूषकस्य पुरीषमङ्गं वा। उपसमस्तमपि मूषकग्रहणं संबध्यते।...पदोपहतं प्रयत्नेनापि यत्सदा स्पृष्टं तदप्यभोज्यम्॥

२९. सिग्वस्त्रदशा। परिहितस्य वाससः सिचा यत्स्पृष्टं तदप्यभोज्यम्॥

३०. शुना वा यद्दृष्टमपपात्रेण वा यद्दृष्टं तदप्यभोज्यम्। पतितचण्डालसूतिकोदक्यादयोपपात्रा अपगताः पात्रेभ्यः। न हि ते पात्रे भोक्तुं लभन्ते॥

३१. अपरिहितस्य शुद्धस्यापि वाससः सिचा यदुपहृतमानीतं तदप्यभोज्यम्॥

३२. ........स्त्रीलिङ्गनिर्देशाद्दासेनाहृते न दोषः। अन्ये लिङ्गमविवक्षितमिति मन्यन्ते। नक्तमितिवचनाद्दिवा न दोषः॥

---

## PAṬALA V. KAṆḌIKĀ 17.

१. भोजनदशायां यदा शूद्र उपस्पृशेत्तदापि न भुञ्जीत। भुञ्जानग्रहणादन्यत्र शूद्रस्य स्पर्शे नाप्रयत्वमिति केचित्। अन्ये तु सदा भवत्यप्रायत्यं भोजनदशायां त्वाधिक्यप्रतिपादनाय प्रतिषेध इति॥

२. सर्वत्र वाशब्दः समुच्चये। अभिजनविद्यावृत्तरहिता अनर्हन्तः। तैः सह समानायां पङ्क्तौ न भुञ्जीत॥

३. समानपङ्क्तावित्यनुवर्तते। समानपङ्क्तौ बहुषु भुञ्जानेषु यद्येकोनुत्थाय भोजनाद्विरम्योच्छिष्टं शिष्यादिभ्यः प्रयच्छेदाचामेद्वा तदा तस्यां पङ्क्तावितरैर्न भोक्तव्यम्। अतो बहुषु भुञ्जानेष्वेको मध्ये न विरमेत। भोजनकण्टक इति समाचक्षते॥

४. मूर्खे वैपर्वेय विषं भुङ्क्ष्वेत्येवं कुत्सयित्वा निर्भर्त्स्य यत्रान्नं दद्युस्तदप्यभोज्यम्॥

५. मनुष्यैरन्यैर्वा मार्जारादिभिरमेध्यैरवघ्रातमन्नमभोज्यम्। अवेस्तुपसर्गप्रयोगादूरस्थैर्गन्धाघ्राणे न दोषः ॥

७. प्रासादो दारुमयो मञ्चः। तत्रापि न भुञ्जीत ॥

८. भूमावपि भुञ्जानः कृतायां गोमयादिना संस्कृतायां भुञ्जीत। अपर आह प्रासादोपि यदा मृदा कृतभूमिर्भवति न केवलं दारुमयस्तदा तत्र भुञ्जीतैवेति ॥

९. यदि मृन्मये भुञ्जीत तदानाप्रीते भोक्तव्यम्। आप्रीतं कचित्कार्ये पाकादावुपयुक्तम् ॥

११. लौहं लोहविकारभूतं कांस्यादि भोजनपात्रं भस्मभिः परिमृष्टं सत्प्रयतं भवति। तत्र "भस्मना कांस्यमम्लेन ताम्रं राजतं शकृता सौवर्णमद्भि"रित्यादि स्मृत्यन्तरवशाद्द्रष्टव्यम् ॥

१४. आपणः पण्यवीथिस्तत्र क्रीतं लब्धं वापणीयं तच्च कृतान्नं नाश्नीयात्। व्रीह्यादिषु न दोषः ॥

१५. रसा रसद्रव्याणि तानापणीयान्नाश्नीयात्। आममांसादि वर्जयित्वा ॥

१६. तैलसर्पिषी त्वापणीये अभ्युपयोजयेदुदकेवधाय निषिच्य। पाकेन तैलसर्पिषी शोधयित्वा। कार्यविरोधो यथा न भवति तथोदकेन संसृज्येत्यन्ये ॥

१८. शुक्तं कालपाकेनाम्लीभूतं तदपि पर्युषितमरसायापेयानाचम् ॥

१९. अनन्तरोक्तविधिद्वयं फाणितादि वर्जयित्वा द्रष्टव्यम्। फाणितं पानविशेषः। इक्षुरस इति केचित्। भ्रष्टानां व्रीहीणां तण्डुलाः पृथुकाः पृथुकतण्डुलाः। करम्भो दधिसक्तुसमाहारः करम्भ इति प्रसिद्धः। वेदेप्युभयं भवति। "यत्करम्भैर्जुहोति धानाः करम्भः परिवाप" इति। भरुजा भृष्टा यवाः। क्षीरविकारो दध्यादिः। प्रसिद्धमन्यत् ॥

२०. "अथ शुक्तं चे"त्यस्य विधेः शेषः शुक्तमित्यादि। परेण द्रव्यान्तरेण योगो यस्य तत्परयोगं ततोन्यदपरयोगं तदेव शुक्तं वर्ज्यम्। यत्तु दध्यादिद्रव्यान्तरसंसृष्टं शुक्तं तद्भोज्यमेव। एवं च पूर्वेणैवापरयोगमितिविशेषणं वक्तव्यम्। इदमेव वा सूत्रमस्तु। सूत्रद्वयकरणं चाचार्यप्रवृत्तिद्योतनं। यथा "सलावृक्येकसृकोलूकशब्दा" इति पूर्वं सामान्येनाभिधाय "सलावृक्यामेकसृक इति स्वप्नपर्यान्त" इति [ १,१०.१९,१,११,३३. ] पश्चाद्विशेष उक्तः ॥

२२. अविरेलका। तस्याः क्षीरमपेयम् ॥

२३. उष्ट्रमृगौ प्रसिद्धो । या गर्भिणी दुग्धे सा संधिनी शाखान्तरे प्रसिद्धा । एककालदोहेत्यन्ये । एकस्मिन्प्रसवेनेक गर्भं सूते सा यमसूः । उष्ट्रादीना क्षीराण्यपेयानि । इतिकरणादेवप्रकाराणामेस्थफाना क्षीरमपेयम् ।....... ...॥

२४. . . .. ....चकारादजामहिष्योश्च । "अजा गावो महिष्य" श्चेति मानवे दर्शनात् ॥

२५. कीलालौपधयः सुरार्था ओपधयस्तासां च विकारभूतमन्नमनाद्यम् ॥

२६. करञ्ज रक्तलशुन पलण्डुः श्वेत परारीका कृष्णडुण्डुभा या म्लेच्छानां प्रसिद्धा । .. ॥

२७. प्रतिपदपाठोशक्य इति समासेनाह यच्चेत्यादि । यच्चान्यदेवं युक्तं शिष्टाः परिचक्षते वर्जयन्ति । . ......॥

२८ क्याकुच्छत्राक तदप्यभोज्यमभक्ष्यम् । ब्राह्मणग्रहणमादरार्थम् ॥

२९ मांसमित्यर्थाद्गम्यते । एकखुरा अश्वादयो गवयो गोसदृशः पशुः शरभोष्टापद आरण्यो मृगः । अन्ये प्रसिद्धाः । एतेषां मांसमभक्ष्यम् ॥

३० धेन्वनडुहोर्मांसं भक्ष्यम् । गोः प्रतिषेधस्य प्रतिप्रसवः ॥

३१ आनडुह मांस न केवलं भक्ष्यम् । किं तर्हि । "मेध्यमपी" ति वाजसनेयिनः समामनन्ति ॥

३२. व्यवहितमप्यभोज्यमिति संबध्यते । पादाभ्या विकीर्य ये कीटधान्यादि भक्षयन्ति ते मयूरादयो विकिरास्तेषा मध्ये कुक्कुटो न भक्ष्यः । स्मृत्यन्तरवशाद्ग्राम्यो नारण्य ॥

३३. तुण्डेन प्रतुद्य ये भक्षयन्ति ते प्रतुदो दार्वाघाटादयस्तेषां मध्ये प्लव एवाभक्ष्यः । शकटबिलाख्यो वकविशेषः ॥

३५. ... . । श्येनाहृतिर्मासः पीनतुण्डः ।.....सुपर्णः श्येनः। ....... ॥

३६. क्रुञ्चा वृन्दचराः क्रौञ्चा मिथुनचराः । ते चाभक्ष्याः । सूत्रे क्रुञ्चक्रौञ्चेतिविभक्तिलोपश्छान्दसः । विशेषेण क्रौञ्चा न भक्ष्याः । नेत्याह । वार्ध्राणसलक्षणवर्जम् । श्वेतो लोहितो वा येषा मूर्धा ते लक्ष्मणास्त एव विशिष्यन्ते वार्ध्राणसा इति । वार्ध्रं चर्म तदाकारा नासिका येषाम् । एवभूताँल्लक्ष्मणान्वर्जयित्वा क्रुञ्चक्रौञ्चा न भक्ष्या इति । अन्ये त्वाहुः । "क्रव्याद" इति मानस्य प्रतिषेधस्य क्रुञ्चादिषु

[1] 'का कृष्णभुण्डुराख्या वन् G U[1], [2] 'रा मण्डुरा वा G U[2]

चतुर्ष्वप्रतिषेध इति। तत्र लक्ष्मणा सारसी। लक्ष्मणवर्जमिति ङ्यापोः संज्ञाछन्दसोर्बहुलमिति [पा०६,३,६३] ह्रस्वः। एवं कुञ्चाशब्दस्याप्यजादिटाबन्तस्य॥

३७. पञ्चनखा नाम वानरमार्जारादयः। तेषां मध्ये गोधादीन्सप्त वर्जयित्वान्ये-भक्ष्याः। गोधा कृकलासाकृतिर्महाकाया। कच्छपः कूर्मः। श्वाविड्वराहविशेषो यस्य नाराचाकाराणि रोमाणि। शल्यको यस्य चर्मणा तनुत्राणं क्रियते। श्वाविच्छल्यक इति युक्तः पाठः। एके तु छकारं पठन्ति छकारात्पूर्वमिकारम्।........ पूतिखषः[1] शशाकृतिर्हिमवति प्रसिद्धः॥

३९. सर्पस्येव शिरो यस्य स मत्स्यो न भक्ष्यः। मृदुरो मकरः।.......ये चोक्तेभ्योन्ये विकृताकारा मत्स्याः। तत्रोदाहरण यथा मनुष्यशिरसो जलमनुष्याख्या जलहस्त्यादयश्च। तेपि सर्वे न भक्ष्याः। अत्र मनुः। अनुमन्तेत्यादि (५,५१) "न मांसभक्षणे दोषो न मद्ये न च मैथुने प्रवृत्तिरेषा भूतानां निवृत्तिस्तु गरीयसी"ति॥ अप्रतिषिद्धेष्वपि भक्षणान्निवृत्तिरेव ज्यायसीत्यर्थः॥

---

## PATALA VI, KANDIKĀ 18.

१. मधु पक्वमपक्वमपि। आमं तण्डुलादि। मृगस्य विकारो मार्गं मांसम्। भूमिः शालेयादि क्षेत्रम्। विश्रामस्थानमित्यन्ये। मूलफलानि मूलं कन्दादि। रक्षाभयदानम्। गव्यूतिर्गोमार्गः। निवेशनं गृहम्। युगं वहतीति युग्यो बलीवर्दस्तस्य घासो भक्ष्यं पललादि। एतान्यप्युग्रतोपि प्रतिगृह्याणि। अदुर्भिक्षेपि। उग्रः पापकर्मा द्विजातिर्वैश्याद्वा शूद्रायां जातः। उग्रग्रहणं तादृशानामुपलक्षणम्।

.३–४. पूर्वोक्तेष्वामं स्वयमेव गृह्णीरन्द्विजा इति हारीतस्यैव पक्षः। आमस्यालाभे कृतान्नस्य वा विरसस्य लवणादिरसैरसंयुक्तस्य। षष्ठीनिर्देशात्स्तोकम्। स्वयमन्तेवास्युपाहृतं वा गृह्णीरन्॥

५. अनन्तरोक्ते विधानद्वये यद् गृहीतं तेन सुभिक्षाः सुहिता न भवेयुः। यावता प्राणयात्रा भवति तावदेव गृह्णीरन्न यावता सौहित्यं तावदिति॥

६. यदा दुर्भिक्षतयात्मनोपि वृत्तिर्न लभ्यते प्रागेव पोष्यवर्गस्य तदा स्वयमप्यवृत्तौ यतैव लभ्यते ततैव भुञ्जीत। तत्र गुणविधिः। सुवर्णं दत्वा सकृदेवोपहत्यमुपरिष्टात्सुवर्णेन स्पृष्टा। एतेन पशुं वा दत्वेति व्याख्यातम्। पशुरग्निः। "अग्निः

---

[1] °षकार G. U.[1,2].  [2] °हिमगुत्फवदृ इति प्र° G. U.[1]; °हांमवति प्र° C U[2].

पशुरासी"दितिमन्त्रलिङ्गाद्गोसूक्तेन चाग्नेरुपस्थानदर्शनात् ॥

७–८. न पुनरत्यन्तमन्ववस्येत् । यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत् । न पुनः "सकृत्प्रवृत्ताया: किमवगुण्ठनेनेति"न्यायेन तत्रैव रमेत । अत्र च्छान्दोग्योपनिषत् । [१,१०,१] । "मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे" इत्यादि ॥ मन्त्रश्च भवति "अवर्त्या शुन आन्त्राणि पेचे" इति । अवर्त्या वृत्त्यभावेन । अपर आह । दुर्भिक्षे स्वयमप्यवृत्त्या तन्निवृत्तेर्यत्र कुत्रचिन्नीचेपि दावरि भुञ्जानो वसेत् । यां च यावतीं च सुवर्णमात्रां यं कंचन पशुं वा तस्मै दत्वा न पुनरत्यन्तमन्ववस्येत्[1] । वृत्तिं प्राप्य विरमेदिति ॥

११. यत्र यदा वैश्वदेवाग्निहोत्रादि नित्यमाभ्युदयिकं वा प्रायश्चित्तं कर्मासेवते तात्पर्येण करोति प्रायश्चित्तवत्यात्मनि चोदितं प्रायश्चित्तं प्राणायामोपवासाविधिकृच्छ्रादि न करोति तदैवस्मात्कारणाद्ब्राह्मणस्यान्नमभोज्यमिति[2] ॥

१२. ..........निष्टया भूतकालस्याभिधानाच्चर्यमाणेपि निर्वेषे न भोज्यम् । किं तर्हि । चरिते ॥

१४. तस्यापि शूद्रस्याप्यन्नं भोज्यं यदयं धर्मार्थमुपनत आश्रितो भवति । धर्मग्रहणादर्थार्थमुपनतस्याभोज्यम् । आपत्कल्पश्चायम् ॥

१६. सङ्घो गणस्तस्य यत्स्वभूतमन्नं न त्वेकस्य तदभोज्यं यद्यपि ते सर्वे दद्युः ॥

१७. भोक्तुकामा आगच्छतेत्येवं परिक्रुश्य सर्वत आहूय यद्दीयते ॥

१९. ये शस्त्रेण जीवन्ति तेषामप्यन्नमभोज्यम् । क्षत्रियवर्जम् ॥

२०. आजीवन्तीत्यपेक्ष्यते । स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणमाधिर्यः स्तोम इति प्रसिद्धः । "परभूमौ कुटिं कृत्वा स्तोमं दत्वा वसेत्तु यः"इति तं चाधिं य आजीवन्ति तेषामप्यभोज्यमिति । ये तु प्रसिद्धमाधिमाजीवन्ति तेषां वार्धुषिकत्वादेव सिद्धोर्थः ॥

२४. भोक्तव्यमिति वक्ष्यमाणमपेक्ष्यते । अग्नीषोमीये पशौ नस्त्विवे समान एव भोक्तव्यम् । न प्रागिति पक्षान्तरम् ॥

२६. इदं यज्ञार्थमिति व्यादेशे कृते शेषाद्भुञ्जीरन्निति ब्राह्मणं भवति । ब्राह्मण-

---

[1] °मन्ववर्सदित् G. U.[1]; °मव सीदेत् G. U.[1], °मवसीदेत् Dev. MSS

[2] Thus C. U.[3], G. U.[1] reads: यत्र यदग्निहोत्रं वैश्वदेवाद्यकरणप्रायश्चित्तमुक्त्वा तदनुरूपं नित्यमभ्युदयिकं कर्मासेवते तात्पर्येण करोति । प्रायश्चित्तवत्यात्मनि न चोदितं प्रायश्चित्तं तदैतस्मा°

ग्रहण प्रीत्युपलब्धितः प्रवृत्तेरपस्मृतिशङ्का माभूदिति प्रत्यक्षमेवात्र ब्राह्मणमिति ॥

२८. राज्ञामितिबहुवचनाद्ग्रामादेर्यः प्रैषकरस्यापि प्रतिषेधः ॥

२९. यश्चाहविषा नररुधिरादिना यजतेभिचारादौ यथायमभिचरेत्तस्य लोहित-मवदान कृत्वेति सोप्यभोज्यान्न ॥

३१. यश्चाविधिना प्रव्रजित' शाक्यादिः सोप्यभोज्यान्नः ॥

३२. अविधिनेत्येव । .. अविधिनोत्सर्गेष्टिं विना . ॥

३३. यश्च सर्वान्वर्जयते भोजने न कंचिद्भुङ्क्ते न कंचिद्भोजयति । .. . निराकृतिः निःस्वाध्याय' । निवृत्तः । अतिव्रत इत्यन्ये । सोप्यभोज्यान्नः । वृपली-पतिः क्रमविवाहे यस्य वृपली जीवतीतरा मृताः स वृपलीपतिः .. ॥

---

## PATALA VI, KANDIKĀ 19

१. ... ..बद्धो निगडितः । अणिकः पुत्राच्छ्रुतमाही पुत्राचार्य इति शास्त्रेषु निन्दितः । *प्रत्युपविष्ट ऋणादिना कारणेनाधमर्णादिक निरुध्य तत्पार्श्वे उपविष्ट'।* इतरस्तत्परिहारमकुर्वंस्तेन सहासीनः प्रत्युपवेशयिता । .अपर आह । अणिक ऋणिक ऋणस्य दाता । प्रत्युपवेष्टुरिद विशेषणमिति ॥

२. .. .यद्यप्येतेभोज्यान्ना इत्युक्ते परिशिष्टा भोज्यान्ना इति गम्यते तथा प्यनेकमतोपन्यासार्थ प्रश्नपूर्वकसमारम्भः ॥

४ सर्ववर्णाना स्वधर्मे वर्तमानानामित्युक्तत्वात्सर्वे पुण्या भोज्यान्ना एव । इह पुनः पुण्यग्रहणमतिशयार्थं तपोहोमजपै स्वधर्मेण च युक्त' पुण्यः स स्वयमप्रार्थ्य-मानोपि भोज्यान्न इति कौत्सस्य मतम् ॥

६. रजः पाप तद्यदि पुण्ये कर्तरि स्थावर स्थिर नोपभोगमन्तरेण क्षीयते तदा ततः प्रतिग्रहेपि भोक्तरि सङ्क्रमाभावाद्भोक्तव्यम् । अथ चेचल तदुपभोगमन्तरेणापि क्षीयते तदा सतत दानशीले न मूहूर्तमपि पापमवतिष्ठत इति कुलो भोक्तरि दोष इति ॥

७. . . . एरकुणिकादीना पक्षाना पक्षः । पौष्करसादिरेव पुष्करसादिः । आदिवृद्ध्यभावश्छान्दसः ॥

८. सर्वत उपेत सर्वतोपेतम् । छान्दसो गुणः । उपेतमयाचितोपपन्न तत्सर्वतोपि

भोज्यमिति वार्ष्यायणीयं मतम् । इदानीं स्वमतमाह ।

९. काण्वकुत्सयोः पक्षौ समुचितावाचार्यस्य पक्षः ॥

१०. यः प्रार्थितो नेत्यसकृदुक्त्वा कथंचिदापादितेप्सः सोनीप्सन्नित्युच्यते । तस्य पुण्यस्याप्यभोज्यम् । अपर आह । अनीप्सत इति कर्तरि षष्ठी । पुण्यस्याप्यन्नं न भोज्यं यदि भिक्षमाणः पूर्ववैरादिना स्वयमीप्सन्न भवति ॥

१२. अद्य तुभ्यमिदमाहरिष्यामि तदत्रभवता माहासिति निवेदनं नियोगस्तदभावोनियोगः । पुनर्नञ्समासः । द्वौ नञौ प्रकृतार्थमतिशयेन गमयतः । अननियोगो नियोगस्तत्पूर्वं चेदभ्युद्यतं तन्न भोज्यमिति ॥

१३. अथापि च पुराणे । "सर्गश्च प्रतिसर्गश्चे"त्यादि । एवंलक्षणे भविष्यदादौ॥

१४. .... .... शल्यकृन्तः शस्त्रेण ग्रन्थ्यादीनां छेत्ताम्नष्टः । .... । चिकित्सकषण्ढयोः पुनर्वचनमुद्यतस्यापि प्रतिषेधार्थम् । .... .... अयं पुराणश्लोक इत्यपौनरुक्त्यम् ॥

१५. षडङ्गस्य वेदस्याध्येता भ्रूणस्तं यो हतवान्स भ्रूणहा । सोन्नादे मार्ष्टि लिम्पति । किम् । प्रकरणादेन इति गम्यते । भ्रूणघ्नो योन्नमत्ति तस्मिंस्तदेनः संक्रामति । तस्मात्तस्योद्यतमप्यभोज्यमिति प्रकरणसङ्गतः पादः । इतरस्तुराणश्लोके पठ्यमाने पठितम् । अनेनसं योभिशंसति मिथ्यैव ब्रूते । इदं पापं त्वया कृतमिति । स तस्मिन्नभिशंसति तदेनो मार्ष्टि । मनुस्तु । पतितं पतितेत्युक्त्वा [ इत्यादि ] इति द्वैगुण्यमाह । तदभ्यासे द्रष्टव्यम् । स्तेनः प्रकीर्णकेश इति [१, २५, ४] वक्ष्यति । स एव तृतीयस्य पादस्यार्थः । कर्तृभेदादपौनरुक्त्यम् । सङ्गरः प्रतिज्ञा प्रतिश्रयः सत्यसङ्गर इति । यथा यः प्रतिश्रुत्य न ददाति सोनृतसङ्गरः । ककारश्छान्दसः । तस्मिन्याचन्याचकः स्वमेनो मार्ष्टि । तस्मात्प्रतिश्रुतं देयमिति ॥

---

## PAṬALA VII, KAṆḌIKĀ 20.

१. इमं लौकिकं लोके विदितं ख्यातिलाभपूजात्मकार्यं प्रयोजनं पुरस्कृत्याभिसन्धाय धर्मं न चरेत् । किं कारणम् ॥

२. यस्मादेवं क्रियमाणा धर्मा अभ्युदये फलकाले निष्फला भवन्ति........ । "यो वै श्रद्धामनारभ्ये"त्यादिश्रुतेः ॥

३. तदिति वाक्योपन्यासे ।.......... ॥

४. यद्यपि देवादयो नानूत्पद्यन्ते तथापि धर्मस्तानुद्रवति स पुरुषार्थः । किमन्यैरर्थैरिति ॥

५. कुहकः प्रकाशे शुचिरेकान्ते यथेष्टचारी । शठो दम्भितः । नास्तिकः प्रेत्याभाववादी । बालः श्रुतरहितः । ........... तथा दुष्प्रलम्भश्च स्यात् । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् । "गृधिवञ्च्योः प्रलम्भ" इतिदर्शनात् । दुष्प्रलम्भो विसंवादयितुं मिथ्याफलाख्यानेन वञ्चयितुमशक्यः । कुहकादिवादेषु वञ्चितो न स्यात्तद्वशो न स्यादित्यर्थः ॥

६. वञ्चनस्य संभवमाह नेत्यादि ॥ आवमितिच्छान्दसं रूपम् । भाषायां तु प्रथमायाश्च द्विवचने "भाषाया"मिति [ पा०. ३,२,८८ ] आत्वं प्राप्नोति । यदि हि धर्माधर्मौ विग्रहवन्तौ गोऽश्वादिवच्चरेतामावां स्व इति ब्रुवाणौ यदि वा देवादयः प्रकृष्टज्ञाना ब्रूयुरिमौ धर्माधर्माविति ततः कुहकादिवादेषु न स्याद्वञ्चना । तद्भावात्तु वञ्चनासंभवः । इदं चात्र द्रष्टव्यम् । प्रत्यक्षादेरगोचरौ धर्माधर्मौ किंतु नित्यनिर्दोषवेदगम्यौ तदभावे तन्मूलशास्त्रगम्याविति ॥

७. यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह -यत्त्वित्यादि ॥ आर्याः शिष्टास्त्रैवर्णिकाः । बहुवचनाच्चत्वारस्त्रयो वा ...॥

८. सम्यग्विनीता "आचार्याधीनः स्या" दित्यादिना [ १,२,१९ ] विनयेन ये संपन्नाः । .... । आत्मवन्तो जितेन्द्रियाः । अलोलुपा अकृपणाः । अदाम्भिका अधर्मध्वजाः । एवंभूतानामार्याणां सर्वजनपदेषु यदेकान्तेनाव्यभिचारेण समाहितमनुमतं वृत्तमनुष्ठानम् । .......... ॥

११. ............कृत्स्नाया वैश्यवृत्तेरुपलक्षणमिदम्। क्षत्रियवृत्तिश्च दण्डापूपिकन्यायसिद्धा । ............ ॥

१२. ........ रसा गुडलवणादयः क्षीरादयो वा । रागा कुसुम्भादयो वा । रज्यन्तेऽनेन इति वा रागा पत्रादयः । ...... । गवा मध्ये वशा वन्ध्या गौः । श्लेष्म जत्वादि येन विश्लिष्टं चर्मादि संधीयते । ......... तोक्मानीषदङ्कुरितानि व्रीह्यादीनि । किण्वं सुराप्रकृतिकं द्रव्यम् । सुकृत पुण्यं तस्य फलं सुकृताशा । ... ........ मनुष्यादीन्वर्जयित्वेत्येव सिद्धेपण्यानीतिवचनमन्येषामपण्यानां व्युदासार्थम् । ............ ॥

१३. ......... अन्येषां विकल्पः । स्वयमुत्पादितेषु नायं प्रतिषेधः । मानवे हि स्मृतम् [ १०,९० ] ॥

१४. विनिमयः परिवर्तनम् । येषां विक्रयः प्रतिषिद्धस्तेषां मिथः परस्परेण विनिमयोऽप्यविहितः प्रतिषिद्धः । न कर्तव्य इत्यर्थः ॥

१५. तेष्वेव केषांचिद्विनिमयोऽनुज्ञायतेऽन्नेनेति ॥ अन्नादीनां च विद्यान्तानां विनिमयो भवत्येवेत्यर्थः । ......... विनिमयाभ्यनुज्ञानादेव विद्यानां विक्रयोऽपि प्रतिषिद्धो वेदितव्यः ॥

## PATALA VII, KANDIKĀ 21.

२. .........तृणत्वादेव सिद्धे मुञ्जबल्वजग्रहणं विकारार्थम् ॥

७. द्विजातिकर्मभ्यो हानिः पतनं तस्य निमित्तानि पतनीयानि कर्माणि वक्ष्यन्ते ॥

८. स्तेयं सुवर्णचौर्यम्। आभिशस्यं ब्रह्महत्यादि। "ब्राह्मणमात्रं च हत्वाभिशस्त" इति वक्ष्यमाणत्वात् [ १,२४,७ ] ......... ब्रह्मोज्झमुज्झ उत्सर्गो भावे घञ् । छान्दसो लिङ्गव्यत्ययः । ब्रह्म वेदस्तस्याधीतस्य नाशनं ब्रह्मोज्झम् ......॥

९. सखीशब्दस्य च्छान्दसो ह्रस्वः । गुरोः सखी मात्रादीनां च सखी गुरुसखी पित्रादीनां च सखी ता एता गत्वा किम् । पततीत्युत्तरत्र श्रुतमपेक्ष्यते । ...... तल्पशब्देन शयनवाचिना परदारा लक्ष्यन्ते ॥

१०. ......यद्यपि सामान्येन "पतनीयानि" त्युक्तं तथापि प्रायश्चित्ते गुरुलघुभावो द्रष्टव्यः ॥

११. शुद्धार्थे । उक्तव्यतिरिक्तानामप्यधर्माणां सततमाचारः पतनहेतुः ॥

## PATALA VIII, KANDIKĀ 22

१. उक्तानि पतनीयान्यशुचिकराणि कर्माणि तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते । तस्यापि सर्वपापहरत्वेन मुख्यप्रायश्चित्तत्वात् । श्रूयते हि । [ माण्डूक्योपनिषदि २,२ ]

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इति ॥

" तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त " इति याज्ञवल्क्योप्याह ( १,७ ) अध्यात्मभवानध्यात्मिकान् । छान्दसो वृद्ध्यभावः । आत्मलम्भयितॄन्योगांश्चित्तसमाधानहेतून्वक्ष्यमाणानक्रोधादीनुपायाननुतिष्ठेत्सेवेत । न्यायसंहितानुपपत्तिसमन्वितान् । उपपद्यते हि न्यायतः क्रोधादीनां दोषाणां निर्घातः । अनैश्चरिकान्निश्चाराश्चित्तस्य बहिर्विक्षेपरतस्मै ये प्रभवन्ति क्रोधादयो वक्ष्यमाणास्ते नैश्चारिकास्तत्प्रतिपक्षभूतान् । अक्रोधादिषु हि सत्सु चित्तमनिश्चरणशीलमात्मालम्बनिश्चलं तिष्ठतीति । तस्मात्ताननुतिष्ठेत् । आत्मानं लब्धुमक्रोधादिलक्षणं चित्तसमाधानं कुर्यादित्यर्थः ॥

२. किं पुनरात्म प्रयत्नेन लब्धव्यः । ओमित्याह आत्मलाभादिति ॥ आत्मलाभात्परमुत्कृष्टं लाभान्तरं नास्ति । तस्मात्तस्य लाभाय यत्न आस्थेय इति । कः पुनरसावात्मा । प्रत्यगात्मा ।... ... ॥

३. तत्सिद्धये श्रौतं ज्ञानं तावदाह तदेति ॥ तदेति वाक्योपन्यासे । आत्मलाभीयानात्मलाभप्रयोजनाञ्श्लोकान् । अनुप्रवचनादिषु दर्शनाच्छप्रत्ययः [ पा० ५,१,१११ ] पादबन्धेनोपनिषदात्मकमन्त्रानुदाहरिष्याम उद्धृत्याहरिष्यामो ग्रन्थे निवेशयिष्यामः ॥

४. गुहेति प्रकृतिनाम ।........... तस्यां शेते तया सहाविभागमापन्नस्तिष्ठतीति गुहाशय आत्मा । .......॥ अहन्यमानस्य न हन्यते शरीरे हन्यमाने हन्यते । विकलमपरं निर्लेपस्य । सर्व एव हि धर्माधर्मादिरन्तःकरणस्य धर्म आत्मनि त्वध्यस्तः । एवंभूतस्यात्मनः सर्व एव प्राणिनो ब्रह्माद्यास्तिर्यगन्ताः प्राणादिमन्तः संघाताः पूः पुरमुपभोगस्थानं यथा राजा पुरमधिवसन्सचिवैरानीतान्भोगानुपभुङ्क्ते तथायं देवादिशरीरमधिवसन्करणैरुपस्थापितान्भोगानुपभुङ्क्ते । तमेवंभूतमचलं सर्वगतत्वेन निश्चलम् । चलनिकेतं निकेतं स्थानं शरीरं तद्यस्य चलं तं येनुतिष्ठन्त्युपासत एवंभूतोहमिति प्रतिपद्यन्ते तेमृता मुक्ता भवन्तीति ॥

५. विषयसंयोगत्यागेनात्ममुपास्य इत्याह यदित्यादि ॥ यदिदं विषयमेतदिति सर्वत्र लिङ्गव्यत्ययश्छान्दसः । एतमिदीति । इतिशब्दे तकारस्य दकारः । इशब्द आश्चर्ये प्रसिद्धो वा । इतिशब्देनानूदितेन शब्दादिषु विषयेष्वज्ञानप्रकारभेदः प्रतिपाद्यते । विषयापहृतचेतसो हि वदन्ति इति ह वस्या गीतमिति ह वस्याः

सुरसपर्श इति ह तस्या रूपं निष्टतमिव कनकम् इति ह तस्याः स्वादिष्टोयरमणिरिति ह तस्या गन्धो मागतर्पग इति । एवं दिव्यमानुषभेदेऽपि द्रष्टव्यः । इति हेति तास्तासामरमस्य इतिगन्धोऽभ्यर्हार्थः । इति हेति हेति चोरं लोके विनय उच्यते । सामान्यापेक्षमेकवचनम् । एतद्विधूय गुहाशयमनुतिष्ठेत् । कविर्मेधावी ॥

६. विषयत्यागे हेतुमाह आत्मन्निति ॥ शिष्यं प्रत्याचार्यस्य वचनमेतत् । द्वौ चात्र हेतू विषयाणां पराधीनत्वमहिततरं च । महान्तं गुणतस्तेजसमग्र्यं तेजःशरीरं तेजोराशिं स्वयंप्रकाशम् । आत्मा ज्योतिः सम्राडिति बृहदारण्यकम् । सर्वत्र निहितं सर्वत्रगम् । प्रभुं स्वतन्त्रमेवंभूतं गुहाशयमेतावन्तं कालमहमात्मन् सप्तम्येकवचनस्य लुक् । आत्मन्यस्मिन्मदीये संघातेऽन्यानपेक्षयैव लब्धुं योग्यमलब्ध्वाथान्येष्विन्द्रियादिषु तं तं विषय प्रतीच्छामि । लडर्थे लट् । प्रत्यैच्छम् । इदानीं तु तं लब्ध्वा न तथाविधोऽस्मि । त्वमप्येतदेव हितं साधुष्ठानं साधुमार्गं मेवस्य नाहितं विषयानुधावनमिति ॥

७. पुनरप्यसौ कीदृश इत्यत आह सर्वभूतेष्विति ॥ सर्वभूतेषु मनुष्यादिषु संघातेषु यो नित्यो विनश्यत्स्वपि न विनश्यति । निपश्चिन्मेधावी चित्स्वरूपः । अमृतो नित्यस्तथाश्चामरणधर्मा । ध्रुव एकरूपो निकाररहितः । न प्रधानवद्विकारिणः सतो धार्मिकत्वेनास्य नित्यत्वमित्यर्थः । अनङ्गः करचरणाद्यङ्गरहितः । अशब्दोऽस्पर्श इति भूतगुणानामुपलक्षणम् । शब्दादिगुणरहितः । अशरीरः सूक्ष्मशरीरेणापि विवर्जितः । महाञ्छुचिः । महत्तरं शौचस्य विशेषणम् । परमार्थतोऽत्यन्तशुद्धः । स सर्वं प्रवृत्त्यभेदद्वारेण । स एव च परमा काष्ठा ततः परं गन्तव्याभावात् । स वैषुवतं विषुवान्नाम गवामयनस्य मध्ये भवमहः । "एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्ये"तिदर्शनात् । विषुवानेव वैषुवतम् । तद्यथा संवत्सरस्य मध्ये भवत्येवमह्नामेष मध्ये । "मध्यं ह्येवायमह्नाम्"मिति बह्वृचब्राह्मणम् । स एव च वैभाजनं पुरं विविधैर्मार्गैर्भजनीयं विभजनं तदेव वैभाजनं प्रज्ञादिरनुशातिरादिश्च । यथा स्मृद्धं एवं सर्वैरधिभिरभिप्राप्यमेवमयमपीति ॥

८. एवं रूपमात्मानं योऽनुतिष्ठेदुपासीत यश्चास्य सर्वत्र सर्वास्ववस्थासु मनःप्राप्त्यनुपूर्व्यं प्रतिपद्यवर्जनं नित्यनैमित्तिककर्मानुष्ठानं चाचरेदथ दुर्दर्शं निपुणं सूक्ष्मतमं पुनः समाहितो भूत्वा पश्येत्साक्षात्कुर्यात्स विष्टपे विगततापे स्वे महिम्नि स्थितो मोदेत सर्वदुःखविवर्जितो भवति संसारदशायामेवाविरोधितं निरतिशयं स्वात्मानन्दमनुभवतीति ॥

## PAṬALA VIII, KANDIKĀ 23

१. सर्वाणि भूतान्यात्मन्नात्मनि शेषत्वेन स्थितानि पश्यन्सर्वभूतान्युपनिषदादिभिर्जानन् पश्चाच्चिन्तयन्युक्तिभिर्निरूपयन्यो न मुह्येन्मध्ये मोहं न गच्छेत्कविर्मेधावी पश्चाच्च सर्वत्रैव शेषित्वेन स्थितमात्मानं पश्येत्साक्षात्कुर्यात्स वै ब्रह्मा ब्राह्मणो नाकपृष्ठे तत्सदृशे स्वमहिम्नि स्थितो विराजति स्वयं प्रकाशते ॥

२. निपुणो मेधावी चित्स्वरूपः । बिसोर्णाया बिसतन्तोरप्यणीयान्सूक्ष्मः । यः सर्वमावृत्य तिष्ठति व्याप्य स्थितः । यश्च पृथिव्या अपि वर्षीयान्वृद्धतरः सर्वगतत्वादेव सर्वमारभ्य विष्टभ्य शेषित्वेनाधिष्ठाय तिष्ठति । ध्रुव एकरूपः । स इन्द्रियैरस्य जगतो यदिन्द्रियैर्ज्ञानमिन्द्रियजन्यज्ञान तस्मात् । कीदृशात् । ज्ञेयानन्दस्य । पञ्चम्यर्थे षष्ठी । ज्ञेयान्नीलपीतादेराकारादनन्यभूत नीलपीताद्याकारं तस्माद्विषयज्ञानादन्य इत्यर्थः । श्रूयते च " तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमय " इति [ तैत्ति० उप० २, ५, १ ] । " ज्ञानस्वरूपमत्यन्त निर्मलं परमार्थतः तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थित"मिति पुराणम् । स्वभावतः स्वच्छस्य चिद्रूपस्यात्मनो नीलपीताद्याकारकालुष्य तद्रूपाया बुद्धिवृत्तेरनुरागकृतं भ्रान्तमित्यर्थः । वैषयिकज्ञानादन्य इतिविशेषणेनार्थज्ञानात्मक इत्यपि सिद्धं " सत्यं ज्ञानमनन्तं ब्रह्मे"ति च श्रुतेः [ तैत्ति० उप० २,१,१ ] । एवंभूतः स आत्मा परमेष्ठी परमे स्वरूपे तिष्ठतीति । विभाज इत्यस्य परेण संबन्धः । विभजत्यात्मानं देवमनुष्यादिरूपेण नानाशरीरानुप्रवेशेनेति विभाक् । तस्माद्विभाजो निमित्तभूतात्सर्वे काया देवमनुष्यादिशरीराणि प्रभवन्त्युत्पद्यन्ते । स मूलं स प्रपञ्चसृष्टेर्भोक्तृतया मूलं कारणं स नित्योविनाशी शाश्वतिक एकरूपोविकारः ॥

३. दोषाणां वक्ष्यमाणानां क्रोधादीनां निर्घातो मूलनाश इह जीविते योगमूलः । योगा वक्ष्यमाणा अक्रोधादयस्तन्मूलः । ततश्च तान्भूतदाहीयान्भूतानि दहतः क्रोधादीन्दोषान्निर्हृत्य क्षेमं गच्छति । आत्मज्ञानद्वारेण पण्डितो लब्धज्ञान आत्मसाक्षात्कारी । क्षेममभयं मोक्षम् । ........... समाप्ताः श्लोकाः ॥

४. भूतानां दाहो भूतदाहस्तस्मै हिता भूतदाहीयाः ॥

५. ........ रोषः क्रोधस्यैव वियानपि भेदो मित्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरः । ... . ....दम्भो धार्मिकत्वप्रकाशनेन लोकरञ्जनम । द्रोहोपकारः । मृषोद्यमनृतवदनम् । ........... असूया परगुणेष्वक्षमा । .......... मन्युर्गूढो द्वेषः । अनात्म्यमजितेन्द्रियत्वं जिह्वादिचापलम् । अयोगो विक्षिप्तचित्तता........॥

६. .......... संविभाग आत्मानमवरुध्यापि दानम्। त्यागोऽपरिग्रहः। आर्जवं मनोवाक्कायानामेकरूपता। मार्दवं मृदुगमनता। . ...योग ऐकाग्र्यम्। आर्याणां भाव आर्यं शिष्टाचारानुपालनम्। आनृशंस्यं व्यवहारवचनादौ सततस्य नैष्ठुर्यस्य वर्जनम्।... समयो व्यवस्था सा च प्रकरणाद्धर्मज्ञानां एवं विषयः। एतेऽक्रोधादयः सर्वेषामाश्रमाणां सेव्या न केवलं योगिनामेवेति धर्मज्ञानां समय इत्यर्थः। ....... सार्वगामी। सर्वस्मै हिताः सार्वा आत्मा तं गच्छति विधिनेति वचनात् "प्राणिना तु वधो यत्र तत्र साक्ष्यनृतं वदे"दित्यादिके विषयेऽनृतवचनादावपि न दोष इति॥

## PATALA IX KANDIKĀ 24

१. क्षत्रियं हत्वा गवां सहस्रं ब्राह्मणेभ्यो दद्यात्। विसर्गम्। वैरयातनार्थम्। वैरं पापं तस्य यातनं निर्हरणं तदर्थम्। उपमन्युराचार्यः "सर्वत्र प्रायश्चित्तार्थं" इति वक्ष्यति तेन प्रायश्चित्तरूपमिदं दानं प्रायश्चित्तं च पापक्षयार्थं तत्किमर्थं वैरयातनार्थमित्युच्यते। केचिदाहुः। "नाभुक्तं क्षीयते कर्म" पुण्यमपुण्यं च। प्रायश्चित्तं तु नैमित्तिकं कर्मान्तरं यथा गृहदाहादौ क्षामवत्यादय इति तन्निराकर्तुमिदमुक्तम्। अपर आह। यो येन हन्यते स हतो म्रियमाणस्तस्मिन्वैरं करोति। अपि नानाहमेनं जन्मान्तरे वध्यासमिति। तस्य वैरस्य यातनार्थमिति प्रायश्चित्तार्थत्वमपि वक्ष्यमाणेन सिद्धमिति॥

४. सर्वेष्वेतेषु निमित्तेष्वृषभोऽभ्यधिको देयो न केवलं दानमेव। इदं प्रायश्चित्तत्रयं मानवेन समानविषयम्। यथाह "अकामतः" इत्यादि [ ११·१,२७–३० ]॥

५. एतेषां क्षत्रियादीनां स्त्रीषु हतास्वेतदेव प्रायश्चित्तं यथा पुरुषेषु॥

६. सवनेषु यौ पूर्वौ वर्णौ क्षत्रियवैश्यौ तयोर्यो वेदाध्यायोऽधीतवेदस्तं हत्वाभिशस्तो भवति। अभिशस्त इति ब्रह्मघ्नोऽभिधानम्। सवनगतं वा तयोरेव वर्णयोर्यः सवनगतः। सवनशब्देन प्रातःसवनादीन्युच्यन्ते नापि यागमात्रम्। किं तर्हि। सोमयागः। तत्र यो दीक्षितः स सवनगतः। "ब्राह्मणो वा एष जायते यो दीक्षित" इतिवचनात्। तं च हत्वाभिशस्तो भवति। पूर्वयोर्वर्णयोरिति किं ब्राह्मणे माभूत्। सिद्धत्वे ब्राह्मणे वक्ष्यति च "ब्राह्मणमात्रं च" इति। एवं तर्हि शूद्रे माभून् शूद्रो वेदाध्यायः सवनगतो वा भवति। इदं तर्हि प्रयोजनं पूर्वयोर्वर्णयोरेव यथा स्यात्तयोरेव यावनुलोमौ सवर्णानन्तरौ तयोर्मा भूदिति तेनान्ये वर्णधर्मा अनुलोमानामपि भवन्ति॥

७. ब्राह्मणमात्र च हत्वाभिशस्तो भवति । नात्रग्रहणात्राभिजनविद्यासंस्कारापेक्षा॥

८ तस्य ब्राह्मणमात्रस्य गर्भं च स्त्रीपुन्नपुंसकभेदेनाज्ञातं हत्वाभिशस्तो भवति॥

९ "ऋतुस्नातामात्रेयीं विद्यु"रिति वसिष्ठः [२०,३५] । तस्येत्यनुवर्तते । तस्य ब्राह्मणमात्रस्यात्रेयीं च स्त्रियं हत्वा ब्रह्महा भवति सम्भवत्यस्या ब्राह्मणगर्भ इति । अत्रिगोत्रात्रेयीत्यन्ये ॥

११ कृत्वेतिवचनान्न परकृता कुटी ग्राह्या ... । शवशिरो ध्वजो यस्य स शवशिरध्वजः । सलोपश्छान्दसः । स्वव्यापादितस्य ब्राह्मणस्य शिरो ध्वजदण्डस्याग्रे प्रोतं कृत्वेत्यर्थः । यस्य कस्यचिच्छवस्येत्यन्ये । शणस्य विकारः शाणी पटी तस्या अर्धमर्धशाणी तस्याः पक्षोऽर्धशाणीपक्षः । आयामविस्तारयोरुभयोरप्यर्धम् । अधो नाभ्युपरिजानु च यथा भवति तथाच्छाद्य तावन्तं प्रदेशमाच्छाद्य । सापेक्षत्वाद् "ग्रामे प्रतिष्ठेतेति [१४] वक्ष्यमाणेन सम्बन्धः । मध्ये क्रियान्तरविधिः ॥

१२. तस्य ग्राम प्रविशतो वर्त्मनी अन्तरा शब्दादेर्वर्त्मनोर्मध्ये पन्था वेदितव्यः। अपर आह । यत्र रथ्यादावुभयोः पार्श्वयो वर्त्मनी भवतस्तत्र तयोर्मध्येन सूत्रादि-पथेन सचरेतेति ॥

१३ अन्यमार्य दृष्ट्वा पथ उत्क्रमेत् । तत्र कौटिल्यः "पञ्चारत्नी रथपथ-श्चत्वारो हस्तिपथो द्वौ क्षुद्रपशुमनुष्याणा"मिति । तेन मनुष्येषु द्वौ हस्तावुत्क्रामेदिति ॥

१४ धर्ममात्र खण्ड लोहितस्मनाप्रीतमयभूत शराव भिक्षापात्रं गृहीत्वा ग्रामे प्रतिष्ठेत ग्राम गच्छेत्[1] ॥

१५. अभिशस्तो ब्रह्महा तस्मै मह्यं को धार्मिको भिक्षां ददातीत्युच्चैर्ब्रुवाणः सप्तागाराणि चरेत् । सप्तग्रहणमधिकनिवृत्त्यर्थम् । द्वित्रिष्वेवागारेषु यदि पर्याप्तं लभ्येत तदा तावत्स्वेव ॥

१६. सप्तस्वागारेषु या च यावती लभ्यते सैव वृत्तिरपर्याप्तापि ॥

१९ तासा गवा निष्क्रमणसमये प्रवेशसमये च द्वितीयो ग्रामेऽर्थप्रयोजनम् । भिक्षार्थं प्रथममुक्तम् । नान्यदा ग्राम प्रविशेदित्युक्त भवति ॥

२०. एवं द्वादश वर्षाणि व्रतमेतच्चरित्वा सद्भिः सम्प्रयोगः कर्तव्यः सद्भिः सह संप्रयुज्यते येन विधिना स कर्तव्यः । स च शिष्टाचारे शास्त्रान्तरे च सिद्धः । स उच्यते । "कृतप्रायश्चित्तस्तु स्वहस्ते यवम गृहीत्वा गामाहूयेत्स्मा यदागत्य श्रद्दधाना भक्षयति तदा सम्यगनेन व्रत चरितमिति जानीयादन्यथा ने"ति ॥

---

[1] खण्डनम् G U [1],[2].—

२१. संग्रामेण जेतव्या दस्यवो येन पथा ग्रामं प्रविश्य गवादिकमपहृत्यापसरन्ति स आजिपथस्तस्मिन्वा कुटिं कृत्वा स आवसेत्। किं चिकीर्षन्। ब्राह्मणगव्यः। "गवा छन्दसी"ति शसि पूर्वसवर्णाभावे यणादेशः। ब्राह्मणगवीरपजिगीषमाणो दस्यूनपजित्य प्रत्याहर्तुमिच्छन्नेवं वसन्दस्युभिर्ह्रियमाणं गवादिकमुद्दिश्य तैर्युद्धं कुर्वंस्त्रिः प्रतिराद्धैरपजितोऽपजित्य वा तान्गवादिकं प्रत्याहृत्य ब्राह्मणेभ्यो दत्वा मुक्तो भवति तस्मादेनसः। द्वादशवार्षिके प्रवृत्तस्येदमेवमुत्तरमपि ॥

२३. धर्मस्याग्निहोत्रादेरर्थस्य च यत्र युगपत्संनिपातस्तत्रोभयानुष्ठानसंभवे धर्मलोपेन योऽर्थं गृह्णाति तस्याप्येतदेव प्रायश्चित्तम्। अथवा यो धर्मं ह्रियार्थहेतोः कौटसाक्ष्यादिकं करोति तद्विषयमेतत्।............ ॥

२४. गुरुः पित्राचार्यादिः श्रोत्रियोऽधीतवेदः स यदि कर्मसमाप्तो भवति सोमान्तानि कर्माणि समाप्तानि यस्य स एवमुच्यते। एतौ हत्वैतेनैवानन्तरोक्तेन विधिनोत्तमाद्‌ उच्छ्वासात्। उत्तम उच्छ्वासः प्राणवियोग आ तस्माच्चरेत् ॥

२५. अश्वमेधावभृथादिषु नरस्तत्पत्यस्मिन्‌देवें परिसमाप्ते प्रत्यापत्तिः शुद्धिर्नास्तीत्यर्थः। मृतस्य तु कल्मषं निर्हण्यते। तेन पुत्रादिभिः संस्कारादि कर्तव्यमिति भावः। अन्ये तु पूर्वसूत्रं तन्निवृत्त्यर्थमेव मन्यन्ते। प्रत्यापत्तिः पुत्रादिभावेन संबन्ध इत्यर्थः ॥

---

## PAṬALA IX., KAṆḌIKĀ 25

१. गुरुरत्र पिता नाचार्यादिः। तल्पशब्देन शयनवाचिना भार्या लक्ष्यते। सा च साक्षाज्जननी न सत्पत्नी। तां गत्वा । ... अनावृत्तिम्। अनावृत्तिर्न क्रियते यस्यां तां दिशम्। अनावर्तमानो गच्छेदिति ।...... ॥

४. स्तेनो ब्राह्मणसुवर्णहारी ॥ ....... ॥

६. तीक्ष्णं तपो महापकारादि। वह्नायच्छेदावर्तयेत्।

८. अथवा संवत्सरमेकं निरन्तर्येण कृच्छ्रांश्चरेत्। एषामेनस्सु गुरुषु गुरूणि लघुषु लघूनीतिव्यवस्था ॥

९. अस्मिन्विषये पुराणश्लोकमप्युदाहरन्तीत्यर्थः।

१०. ब्रह्महत्यान्यविरिक्तानि स्तेयादीनि कृत्वा चतुर्थकालाश्चतुर्थो भोजनकालो

येषां यथाद्य दिवा भुञ्जते श्वो रात्रौ ते तथोक्ताः। तथा मितभोजना न मृष्टाशिनः। ............तिष्ठेयुरहनि रात्रावासीरन्नेवं स्थानासनाभ्यां विहरन्तः कालं क्षिपन्त एते त्रिभिर्वर्षैस्तत्पापमपनुदन्ते ॥

११. प्रथमो वर्णो ब्राह्मणस्तं हत्वा संग्रामं गत्वा सेनयोर्मध्येवतिष्ठेत। किं सर्वे। नेत्याह। प्रथमं वर्णं परिहाप्य। ब्राह्मणवर्जमितरो वर्णः क्षत्रियादिरित्यर्थः। तत्र स्थितमेनं सैनिका हन्युरेनं हतं विदध्युः। अघ्नन्तस्त एनस्विनः स्युर्यथा राजा स्तेनम्। स मृतः शुध्यति ॥

१२. अनन्तरोक्तविषये प्रायश्चित्तान्तरम्। इतिशब्द उपलक्षणार्थः। आत्मनो लोमादीन्युत्कृत्य पुरोहितेन हावयित्वा होमं कारयित्वा पश्चात्स्वयं तस्मिन्नग्नौ प्रविशेत्। मृतः शुध्यति। तत्राग्निमुपसमाधाय जुहुयात् "लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासये स्वाहा। त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासये स्वाहा। लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वासये स्वाहा। स्नावानि मृत्योर्जुहोमि स्नावभिर्मृत्युं वासये स्वाहा। मांसानि मृत्योर्जुहोमि। मांसैर्मृत्युं वासये स्वाहा। अस्थीनि मृत्योर्जुहोम्यस्थिभिर्मृत्युं वासये स्वाहा। मज्जानं मृत्योर्जुहोमि मज्जभिर्मृत्युं वासये स्वाहा। मेदो मृत्योर्जुहोमि मेदसा मृत्युं वासये स्वाहा"। इत्येते मन्त्रा वसिष्ठेन [ध० शा० २०,२६] पठिताः ॥

१३. ...........प्रचलाकः कामरूपी कृकलासः।..........भासो गृध्रविशेषः। श्वनकुलमण्डूकाः प्रसिद्धाः। डेरिका गन्धमूषिका। एतेषां समुदितानां वधे शूद्रवत्प्रायश्चितम्। प्रत्येकवधे तु कल्प्यम्। केचित्प्रत्येकवध एतदित्याहुः ॥

---

## PAṬALA IX. KAṆḌIKĀ 26.

१. ........*तयोः कारणमन्तरेण हिंसायां शूद्रवत्प्रायश्चित्तं कार्यम्*। कारणं कोपो मांसेच्छा वा। ताभ्यां विना। अबुद्धिपूर्वमित्यर्थः। 'बुद्धिपूर्वं तु गां हत्वा। वैश्यवत्'दित्यादिस्मृत्यन्तरोक्तं द्रष्टव्यम् ॥

२. धुरं वहतीति धुर्यो बलीवर्दस्तेन वोढुं शक्या धुर्यवाहास्तावत्सु हिंसायाः प्रवृत्तौ सत्यामितरेषां प्राणिनाम्। केवलं प्राणा येषां नास्तीति तेषां हिंसायां शूद्रवत्प्रायश्चित्तमिति। ....... ॥

३. यो न कथंचनाक्रोशमर्हति स पित्राचार्यादिरनाक्रोश्यः। अनृतं योक्त्वा पातकोपपातकवर्जं त्रिरात्रं क्षीरादिभोजनं वर्जयेत्। क्षीरग्रहणेन तद्विकाराणां दध्यादीनामपि ग्रहणमित्याहुः॥

५. क्षत्रियं हत्वेत्यादि [ १, २४, १ ] अनृतवचनान्तेषु [ १, २६, ४ ] निमित्तेषु यानि प्रायश्चित्तान्युक्तानि तानि स्त्रीणामप्येवमेव कर्तव्यानि। एतच्चत्वारो वर्णा इतिजात्यभिधानादेव प्राप्त सनियमार्थमुच्यते। अत ऊर्ध्वं पुरुषस्यैव न स्त्रीणामिति। अपर आह। जात्यभिधानादेव सिद्धेतिदेशार्थमेवं वचनम्। अतिदेशेषु चार्धं प्राप्यत इति स्मार्तो न्यायस्तेन स्त्रीणामर्धप्राप्त्यर्थं वचनमिति। तथा च भार्गवः। 'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव चे'ति॥

६. येषु हेतुषु सवनगतं चाभिशस्तः [१, २४, ६] इत्यादिनाभिशस्तत्वमुक्तं तेषामेकाङ्गं छित्वा शूद्रवत्प्रायश्चित्तं कुर्यात्। अप्राणहिंसायां यदि च्छेदनेन तस्याङ्गस्य शक्तिर्न हन्यते[1]॥

७. आर्याणां भाव आर्यम्। तद्यस्मिन्नाचारेऽस्ति तदार्यवम्। मत्वर्थीयो वप्रत्ययः। ततोऽन्यदनार्यमसत्यभाषणादि। .......... । अभक्ष्यं वृथाकृसरादि। अभोज्यं केशकीटाद्युपहतम्। ...... दोषवच्च कर्म श्रौतमभिचारिकम्। ...अब्लिङ्गाभि'रापो हि ष्ठा मयोभुव' इति तिसृभिः। 'हिरण्यवर्णाः शुचयः पावका' इति चतसृभिरप उपस्पृशेत्। तूर्णीं प्रथमं स्नात्वा पश्चादेतैर्मन्त्रैर्मार्जनं कुर्यात्। वारुणीभिर्वा। 'इमं मे वरुण' 'तत्वा यामि' 'त्वं नोऽग्ने' 'स त्वं नो अग्न' इत्येताभिरन्यैर्वा पवित्रैः। 'पवमानः सुवर्जन' इत्येतेनानुवाकेन शुद्धवतीभि'स्तरत्समन्दी'येन च। यथा कर्माभ्यासः कृतस्तथाप उपस्पृशेत्। अभ्यासेन कर्मणि कर्मणि प्रत्येकमहरहः प्रायश्चित्तमेतदित्याहुः॥

८. .........हारीतस्तु। स्त्र्यवकीर्णी निर्ऋत्यै चतुष्पथे गर्दभं पशुमालभेत। पाकयज्ञधर्मेण भूमौ पशुपुरोडाशश्रपणम्। अवदानैः प्रचार्याज्यस्य जुहोति 'कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहे'ति॥

१०. नियमातिक्रमेणाधीतं मिथ्याधीतम्।...... ॥

११. आचार्यहिते वर्तमानो भूत्वा संवत्सरं वाचंयमः स्यात्। स्वाध्यायादिष्वेव

[1] शक्तिर्ध्वंसयति G. U.

याचमुत्सृजमानः । आचार्ये तं प्रति कार्यनिवेदने । एवमाचार्यदारे । भिक्षाचर्यं भिक्षाचरणं तत्र च 'भवति भिक्षां देही'ति । अस्मादेव ज्ञायतेसमावृत्ताविषयमेतदिति[1] ॥

१२. .........अपिशब्दान्मिथ्याधीतेपि ।....... ॥

१३. ....... दोषाभ्यासानुरूपा च होमजपयोरावृत्तिः ॥

## PAṬALA IX, KAṆḌIKĀ 27.

१. गिरिप्रभवा समुद्रगा महानदी तत्र भवं महानदम् । 'समित्सहस्रं यज्ञियस्य वृक्षस्यादध्या'दितिवचनान्न होमधर्मः स्वाहाकारः ॥

२. पवित्रार्थाः शुद्ध्यर्थाः ......यज्ञक्रतवः सोमयागा अग्निष्टोमादयः ।....॥

३. अभोज्यस्य मार्जारादिमांसस्य भक्षणे निष्पुरीषभावः कर्तव्यो यावदुदरं निष्पुरीषं भवति तावदुपवस्तव्यम् ॥

४. ......नैष्पुरीष्यवचनाद्येषां त्रिरात्रेणैव तदवाप्यते तेषां तावतैव शुद्धिः....॥

७........ अत्र स्मृत्यन्तरवशाद्विष्यमन्नं ब्रह्मचर्यं स्त्रीशूद्रादिभिरसंभाषणं च ॥

८. एतमेव विधिम् ।.......॥

९. अथापरं प्रायश्चित्तमुच्यते । अनश्नतैव निरन्तरं त्रीणि पारायणानि कर्तव्यानि । आदित आरभ्यासमाप्तेर्वेदस्याध्ययनं पारायणम् । .......॥

१०. अनार्यां शूद्रां शयने विभ्रदुपगच्छन् । ददद्वृद्धिं वृद्ध्यर्थं द्रव्यं ददद्वृद्ध्या जीवन्नित्यर्थः । सुराव्यतिरिक्तं मद्यं कषायः ।........ तृणेपूद्यादारभ्यासीत यावदस्यादित्यः पृष्ठं पश्चाद्भागं तपति । आदित्ये तपति तदानुगुण्याचरणात्स्वयमेव पृष्ठतापीत्युच्यते । अभ्यासेभ्यासो यावता शुद्धिं मन्यते ॥

११. कृष्णो वर्णः शूद्रस्तमाज्ञाकरो भूत्वा वृत्त्यर्थं सेवमानः । शिष्टं स्पष्टं गतं च । अपर आह । शूद्रां मैथुने सेवमान इति । अस्मिन्पक्ष ऋतावुपगमनेपत्योत्पत्ताविदं द्रष्टव्यम् । ....... ॥

## PAṬALA X, KAṆḌIKĀ 28.

१. यथा कथा चापद्यनापदि वा भूयांसमल्पं वा परपरिग्रहं परस्वमभिमन्यते ममेदमस्त्विति बुद्धौ कुरुते बुद्धौ कृत्वादत्त इत्यर्थः । सर्वथा स्तेन एव भवतीति कौत्सादयो मन्यन्ते ॥

[1] समावृत्त॰ G. U.[1]

२. वार्ष्यायणिस्तु मन्यते । केचित्परपरिग्रहेषु स्तेयस्यापवादाः सन्तीति । तानेवोदाहरति ॥

३. शमी बीजकोषी तस्यामुप्यन्ते दह्यन्ते कालवशेन पच्यन्त इति शम्योषाः कोषीधान्यानि मुद्गमाषचणकादीनि । युगं वहतीति युग्यः शकटवाही बलिवर्दस्तस्य घासो भक्षणम् । एतेष्वादीयमानेषु स्वामिनो न प्रतिषेधयन्ति । स्वामिनः प्रतिषेधं न कारयन्ति । आदीयमानेषु स्वामिनो न प्रतिषेद्धुमर्हन्तीति । स्वयंग्रहणेपि न स्तेयदोष इति यावत् । ........ ॥

४. ........व्यूढो दुष्टः । ........... ॥

७. अस्मात्पतितादाचार्याज्ज्ञातेर्वा पित्रादेर्भोगान्भोगसाधनानि दायप्राप्तान्यपि नोपयुञ्जीत न गृह्णीयात् ॥

९. पुत्रत्वस्य स्वार्थिकस्त्वः । यथा देहत्वमेवान्यदिति [२, २४, २] । पुत्रस्य कृते माता भूयांसि दृष्टादृष्टार्थानि गर्भधारणाशुचिनिर्हरणस्तन्यदानप्रदक्षिणनमस्कारोपवासादीनि कर्माणि करोति तस्मात्तस्यां पतितायामपि शुश्रूषाभ्यञ्जनस्नापनादिका नित्या नित्यमेव कर्तव्या ॥

१०. एकस्मिन्धर्मे सहान्वयो धर्मसंनिपातः । स पतितया मात्रा न कर्तव्यः । नाम सुब्रह्मण्यायां मातुर्नामग्रहणं वरुणप्रघासेषु यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानीत्यादिकमुदाहरणम् । किं पुनरेवमादिषु मातुरन्वयः शुश्रूषा । ओमित्याह । अन्विता हि सा संमता मन्यते निरस्ता तु विमता । वैश्वदेवार्थे पाके च सा न भोजयितव्या । मृतायास्तु तस्याः संस्कारादिकाः क्रियाः कर्तव्याः । नेति विप्रतिपन्नाः ॥

११. ....... अनुज्ञाय परित्यज्य[1]........॥

१४. उक्तव्यतिरिक्तानि यानि पतनीयानि पूर्वमुक्तानि तेषु यत्राहत्य प्रायश्चित्तमनुक्तं तेषामप्यनन्तरोक्तमेव प्रायश्चित्तं वेदितव्यम् । उक्तविषये विकल्प इत्यन्ये । तत्र ज्ञानाज्ञानकृतो विकल्पः ॥

१५. ............ अनन्तरस्य वैकल्पिकस्य निवृत्त्यर्थं वचनम् ।

१६. हारीतस्त्वृषिर्मन्यते । एतदनन्तरोक्तं मरणान्तिकं प्रायश्चित्तं मिथ्या । न कर्तव्यमिति । कुत इत्याह ॥

१७. हि यस्मात् आत्मानं परं वाभिमन्यते मारयति सोभिशस्त एव भवति

[1]अपरित्यज्य G. U.[1]—

ब्रह्मैव भवति। न च महापातकस्य ब्रह्महत्या प्रायश्चित्तं भवितुमर्हतीति हेत्वभिधानादभिशस्तवचनाच्चान्येषामपि मरणान्तिकानां ब्राह्मणविषये निवृत्तिः। किं तर्हि तस्य प्रायश्चितम्॥

१८. अधोनाभ्युपरिजान्वित्यादि यदनन्तरमुक्तमेतेनैव विधिना [१,२४,११] शिष्टं गतम्॥

१९. यस्त्वन्तरेणैव निमित्तं कौमारान्दारान्परित्यजति।.......॥

२० भर्तृव्यतिक्रम इति च्छान्दसो रेफलोपः। व्यतिक्रमः परित्यागः।........॥

२१. षडङ्गस्य वेदस्याध्येता तदर्थवित्प्रयोगशास्त्रस्य च सव्याख्यानस्य चार्थवित्कर्मणामनुष्ठातानुष्ठापयिता च ब्राह्मणो भ्रूणः। तथा च बोधायनः [गृ० सू०]। वेदानां च किंचिदधीत्य ब्राह्मणः। एकां शाखामधीत्य श्रोत्रियः। अङ्गाध्याय्यनूचानः। कल्पाध्याय्यृषिकल्पः। सूत्रप्रवचनाध्यायी भ्रूण इति। तं हतवान्भ्रूणहा। स पुनः खरस्य वाजिनं बहिर्लोम परिधाय पुरुषस्य शिरो यस्य कस्यचिन्मृतस्य शिरः प्रतीपानार्थम्। प्रतिर्धात्वर्थानुवादी। उपसर्गस्य घञ्यमनुष्ये बहुलमिति [पा० ६, ३, १२२]। बाहुलको दीर्घः। पानमेव प्रतीपानम्। पानग्रहणमुपलक्षणं भोजनमपि तत्रैव।..........॥

---

## PAṬALA X, KAṆḌIKĀ 29.

१ क्षत्रियं हत्वेत्येवमादिकेनुक्रान्ते विषये यः प्रमत्तो हन्ति प्रमादेनाबुद्धिपूर्वं हन्ति तस्यापि दोषफलं प्राप्तमेव। न तु प्रमादकृतमिति दोषाभावः॥

२. संकल्पेन सह कृते वधे भूयः प्रभूततरं भवति तेन प्रमादकृते लघु प्रायश्चित्तं बुद्धिपूर्वे तु गुर्विति...........॥

७. अस्य प्रतिप्रसवः। यो हिंसार्थमित्यादि॥ यस्तु हिंसार्थं मारणार्थमभिक्रान्तन्तमभिपतन्तं हन्ति न तस्मिन्दोषो विद्यत इति पुराणे श्रुतम्। दोषाभावे हेतुर्यस्मान्मन्युरेव मन्युं स्पृशति न पुरुषः पुरुषम्। अत्र वसिष्ठबोधायनौ [व० ३, १८, बो० १, १८, १२]।

स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम्।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति॥

मनुस्तु [८. ३४८.]

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानां च संगरे ।
स्त्रीविप्राभिविपत्तौ च घ्नन्धर्मेण न दुष्यतीति ॥

गोतमोपि [ ७, २५ ] ।

प्राणसंशये ब्राह्मणोपि शस्त्रमाददीतेति ॥

वसिष्ठोपि [ ३, १६–१७ ] ।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेदिति ॥

८ पतितैरकृतप्रायश्चित्तैरुत्पादितानां पुत्राणामपि पातित्यमस्तीति प्रतिपादयितुं पूर्वपक्षं तावदाह अथेत्यादि ॥ अथशब्दोर्थान्तरप्रस्तावं सूचयति । अभिशस्ताः पतिताः समवसाय चरेयुः । अवसानं गृहम् । समित्येकीभावे । ग्रामाद्बहिरेकस्मिन्प्रदेशे गृहाणि कृत्वा चरेयुर्धार्म्यं धर्म्यं वक्ष्यमाणं वृत्तमिति सांशित्य संशितां तीक्ष्णां बुद्धिं कृत्वा निश्चित्येत्यर्थः । इतरेतरं याजयन्त इतरेतरमध्यापयन्तः परस्परं च विवाहसंबन्धं कुर्वन्तश्चरेयुर्वर्तेरन्निति ॥

९. अथ ते पुत्रान्संनिष्पाद्य ब्रूयुः । हे पुत्रा अस्मदस्मत्तो विप्रव्रजत विविधं प्रकर्षेण च स्नेहमुत्सृज्यार्यसमीपं गच्छत । एवं ह्यस्मत्स्वस्मास्वार्याः शिष्टाः संप्रत्यपत्स्यत । आशंसायां भूतवच्चेति [ पा० ३, ३, १३२ ] भविष्यति लुङ् । सकारात्परो यकारश्छान्दसोपपाठो वा । संप्रतिपत्तिं करिष्यन्ति । आर्याणामप्येतदभिमतं भविष्यति यस्मादस्माभिरेव पतनीयं कर्मानुष्ठितं न भवद्भिरिति न च पतितेनोत्पादितस्य पातित्यमन्यत्वात् । एतदेवोपपादयति ॥

१०. न हि पतितो भवन्महेन्द्रियेण पतति पुरुष एव पतति नेन्द्रियं शुक्रमिति[1] अथापिशब्दावपिचेत्यस्यार्थे ॥

११. ..........एवमधिकारविकलः साधिकारं जनयति । स्त्रिया अपि कारणत्वात्तस्याश्च दोषाभावात् ॥

१२. दधि धीयते यस्यामिति दधिधानी स्थाली तया सधर्मा सदृशी स्त्री भवति ।

[1] शुक्लमिति G U,[1,3], here and elsewhere.

१४. .. .. ......एवं पतितसंबन्धेनाशुचि शुक्रं स्त्रियां निषिक्तं शोणितेनाक्तं यान्निर्वर्तते येन रूपेण निष्पद्यते न तेन सह संप्रयोगो विद्यते शिष्टानाम् । अत्र चाशुचि शुक्रमित्येतद्यथापि न सेन्द्रियः पततीत्यस्य दूषणम् । न हि वाचनिकेर्थे युक्तयः प्रवर्तन्ते । तथा च समानायामप्युत्पत्तौ पुत्र एव पतति न दुहिता यथाह वसिष्ठः [१३, ५१-५३]। 'पतितोत्पन्नः पतितो भवत्यन्यत्र स्त्रियाः। सा हि परगामिनी। तामरिक्थामुपेया'दिति ॥

१५. अभिचार एव अभीचारः । उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः [ पा० ६, ३, १२२ ] । अभीचारः श्येनादिः । अनुव्याहारः शापः । तौ ब्राह्मणविषये क्रियमाणावशुचिकरावेव न पतनीयौ ॥

१७. अशुचिकराणामपि कर्मणां येषामाहत्य प्रायश्चित्तं नोक्तं तेषामपि पतनीयेषु कर्मसु या वृत्तिः प्रायश्चित्तं सैव प्रायश्चित्तिः । कियन्तं कालं द्वादशमासाद्येकाहान्तम् ॥

१८. किमविशेषेण सर्वेष्वप्यशुचिकरेष्वयं कालविकल्पः । नेत्याह । इत्येष इत्यादि । इत्येष शुचिकरनिर्वेशो यथा कर्माभ्यासस्तथा वेदितव्यः । बुद्धिपूर्वे सानुबन्धेभ्यासे च भूयांसं कालं विपरीते विपर्यय इति ॥

---

## PAṬALA XI., KANḌIKĀ 30

२. परिमाणमेव परीमाणम् । छान्दसो दीर्घः ।......... ॥

३. विद्येति तृतीयैकवचनस्याकारः ।.......... ॥

४. ..........स्नातकवत् । तदर्हमिति वतिः । स्नातकार्हा वृत्तिः पूजा... .... कार्या ।...... ॥

५. कर्तव्येषु कर्मस्ववधानं समाधिः । श्रुतिः श्रुतम् ॥

६. .......शीलयेदितिवचनेन यदृच्छया द्वारान्तरेण निष्क्रमणप्रवेशयोरपि न प्रायश्चित्तम् ॥

८. .......... अन्ये त्वासनग्रहणं स्थानस्याप्युपलक्षणं । वाग्यतश्चेति लौकिक्या वाचो निवृत्तिर्न सावित्रीजपस्येति वर्णयन्ति ॥

९. आहिताग्निविषयेस्यापवादमाह निप्रतिषेध इत्यादि ॥ विरोधो विप्रतिषेधः । अग्निहोत्रिणो बहिरासनमग्निहोत्रहोमश्च विरुध्यते । तत्र श्रुतिलक्षणमग्निहोत्रमेव कर्तव्यं न स्मार्तं बहिरासनम् । तस्य कल्प्यमूलत्वादितरस्य क्लृप्तमूलत्वात् ॥

१०. कुसुम्भादयः सर्वे रागा वाससि वर्जनीयाः । न केनचिद्रक्तं वासो बिभृयादिति ॥

११. ........स्वभावतः कृष्णं कम्बलादि........ ॥

१२. ............ अनूद्वासि । छान्दसो दीर्घः ।.... ॥

१३ प्रतिकृष्टं निकृष्टं जीर्णं मलवत्स्थूलं च । तद्विपरीतमप्रतिकृष्टम् । .......॥

१७. छान्दसस्तुगभावः । द्वितीयाश्रुतेः प्रतिशब्दाध्याहारः । अवमेहनं मूत्रकर्म । अनुपजीवित्वान्नायं पूर्वस्य प्रतिषेधस्य विषय इति प्रतिप्रसवोयं न भवति । तेन सति संभवे छायां मलवमेहव्यम् ॥

२०. ........ देवता देवताप्रतिमाः ।

२१. फलपाकावसाना ओषधयः । ये पुष्पैर्विना फलन्ति ते वनस्पतयः । आर्द्रानितिवचनाच्छुष्केषु न दोषः । ऊर्ध्वानितिवचनाद्वातादिनिमित्तेन भग्नेषु न दोषः । ....॥

२२. अग्न्यादीन्प्रति पादौ न प्रसारयेत् ॥

## PAṬALA XI., KAṆḌIKĀ 31.

२ ..............द्वितीयानिर्देशादुपनिष्क्रम्येति गम्यते । दक्षिणापरा नैर्ऋती ॥

६. ................इतिशब्दः प्रकारे । तेन वयोविद्यावृद्धानां ब्राह्मणानामपि वर्जयेत् ॥

८. ................अध्यात्मप्रकरणे योगाङ्गतया परीवादः प्रतिषिद्धः । अनन्तरं च वक्ष्यति 'क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेदिति [ सू० ३१ ]। इदं तु वचनं गवादिषु प्रायश्चित्तातिरेकार्थम् ।

९. सूदन्तीं सस्यधान्यादिकं भक्षयन्तीं गां स्वामिने न ब्रूयात् ॥

१०. ............अनिमित्त इतिवचनाद्यस्य हविषे वत्सा अपाकृता धयेयुरित्यादिके निमित्ते सति वक्तुर्नास्ति दोषः ॥

१२. ............प्रशास्तं प्रशस्तम् । छान्दसो दीर्घः ॥

१३. वत्सानां बन्धनरज्जुर्वत्सतन्ती । तस्या उपरि न गच्छेत् । तां न लङ्घयेत् । वत्सग्रहणं गोमात्रोपलक्षणम् ॥

१४. द्वेह्वौ दोहनस्तम्भौ तोरणस्तम्भावित्यन्ये । ........ ॥

१७. पततः पक्षिणः संघीभूय स्थितान्न संचक्षीत न गणयेत् । अपर आह पुण्यक्षयेण स्वर्गात्पततः सुकृतिनः परस्मै न संचक्षीत । ज्योतींषि पतन्तीति न कथयेदिति ॥

१९. ......... तस्मादमावास्यायां निशायां स्वाधीयः । वकारश्छान्दसः । अन्तिकबाढयोर्नेदसाधौ । साधीयो बाढतरं भृशतरमात्मनो गुप्तिं रक्षामिच्छेत् । केन (पा.५,३-६३)प्रकारेण । प्रायत्यब्रह्मचर्याभ्यां काले चर्यया च । अयं तु बावदर्थानुरूपः पाठः । अधीयमानस्तु प्रमादश्छान्दसो वा । प्रयतस्य भावः प्रायत्यं नित्य प्रायत्यादाधिकेन प्रायत्येन स्नानादिजेन ब्रह्मचर्येण मैथुनत्यागेन काले कृतया च चर्यया देवार्चनजपादिकया ॥

२२. अब्राह्मणः शूद्रः । न शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यादिति वासिष्ठे [ ११, १० ] दर्शनात्[1] । तस्मा उच्छिष्टं न प्रयच्छेदिदमनाश्रितविषयम् । यदि प्रयच्छेदिदमाश्रितविषयम् । दन्तान्स्कुप्त्वा विलिख्य तन्मलं तस्मिन्नुच्छिष्टेवधाय दद्यात् । स्कुभ्नोतेः क्त्वाप्रत्ययः । छान्दसं भकारस्य चर्त्वम् । स्कुनोतेर्वा पकार उपसंख्यानः ॥

१. प्रवचनमध्यापनम् । तेन युक्तो वर्षासु शरदि च मैथुनं वर्जयेदृतावपि ॥

४. यस्यां शय्याया भार्यया सह रात्रौ शयीत तस्यां शय्यायामासीनोपि नाध्यापयेत् ॥

६. दारं प्रतीति वचनादुपगमनार्थमलंकरणम् । तेन भार्याया अशक्त्यादिनोपगमनायोग्यत्वे नायं नियमः ॥

७. वमज्जनमवमज्जनम् । ................ ॥

९. ........................इतिशब्दः प्रकारे । तेनान्यदपि गृहोपकरणं पालाशं वर्जयेत् ॥

११. निशा रात्रिमध्यभागः । आ तस्माज्जागृयान्न स्वप्यात् ॥

१४. अयमपि प्रतिप्रसवः । निशायामपि षोडश्या नाडिकाया आरभ्याध्यापनं भवतीति ॥

१६. अनेन स्तम्भाद्यपाश्रयणेनासीनस्य स्वापोनुज्ञायते । अपाश्रित्य वा स्वप्यादिति । तत्र रेफलोपश्छान्दसः । तथा च शकारस्य द्विर्वचनम् ॥

[1] Vasishtha's text omits the initial अ.

१८. क्षुद्रानल्पकान्पुरुषान्न सेवेत । क्षुद्रैर्निषादादिभिरधिष्ठितांश्च देशान्न सेवेत ॥

२१. बहुवचननिर्देशाद्बहुकृत्वो नगरं न प्रवेष्टव्यम् । यत्तु कदाचिद्यदृच्छिके प्रवेशे न प्रायश्चित्तम् ॥

२२. विविच्य वचनं विवचनं निर्णयः । पृष्टमर्थं न विविच्य ब्रूयादित्थमेवेदमिति दुर्निरूपार्थविषयमिदमिति ॥

२४. दुर्निरूपमर्थं सहसा निर्णीय यो दुर्विवक्त्यन्यथा निर्णयति तस्य दुर्विवक्तुस्तदेव दुर्विवचनं मूलं तूलं च वृहति । मूलं पित्रादयः । तूलमागामिनी संपत् । तदुभयमपि वृहत्युत्पाटयति । दन्त्योष्ठ्यो वकारः । किमेतावदेव । न । प्रजां पुत्रादिकां पशून्गवादिकानायतनं गृहं च हिनस्ति । अतो दुर्वचनसंभवात्प्रमात्रमेव न विब्रूयादिति । अत्रेतिहासः ।[1]कस्यचिद्दैत्येर्धर्मप्रह्लादः कुमालनश्चेति द्वौ शिष्यावास्ताम् । तौ कदाचिदरण्यान्महान्तौ समित्भारावादाय प्रमादाददृष्टिपूर्वत एवाचार्यगृहे प्राक्षिपताम् । तयोरेकेनाचार्यस्य पुत्रः शिशुराक्रान्तो मृतः । ततः शिष्यावाचार्यः पप्रच्छ । कोऽसौ येनायं मारित इति । तावुभावपि न मयेत्यूचतुः । ततः पतितस्य परित्यागमदुष्टस्य परिग्रहं कर्तुमशक्नुवन्नृषिर्मृत्युमाहूय पप्रच्छ केनायं व्यापादित इति । ततो धर्मसंकटे पतितो मृत्यू रुदन्नेव प्रश्नं न्युवाच विविच्य कथितवान् । हे धर्मप्रह्लाद न कुमालनाय । पष्टपर्धे चतुर्थी । कुमालनस्य नेदं पतनीयमिति । धर्मप्रह्लाद त्वयेदं कृतमिति वक्तव्य इतरस्य नास्तीत्युक्तं तथापीतरस्यास्तीत्यर्थाद्गम्यत इति रुदन्न्युवाचेति । हशब्द ऐतिह्यद्योतनार्थः । प्रह्लादशब्दे हकारपरो रेफः ॥

२७. .......नावामिति पष्टयन्तपाठे नावां मध्ये सांशयिकीं वर्जयेत् ॥

२९. द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥

---

## PRAŚNA PATALA II., KANDIKĀ 1.

१. ...... पाणिर्यस्मिन्नहनि गृह्यते तत्पाणिग्रहणम् । अधिशब्द ऊर्ध्वार्थे वर्तते । तस्मादूर्ध्वं गृहमेधिनोर्गृहाश्रमव्रतोयेद् व्रतं कर्तव्यं आवश्यकवचनं तदुच्यते । पाणिग्रहणादधीति भार्यादिरभिर्दायादिर्वेति शाखान्तरोक्तो विकल्पो मा भूदिति । गृहमेधिनोरितिद्विवचनमन्यतरमरणे मा भूदिति । ........ ॥

२. कालयोरुभयोर्भोजनं कर्तव्यं सायं प्रातश्च नान्तरेति परिसंख्येयं भोजनस्य

---

[1] धर्मप्रह्लाद G.[1]7[a].

रागतः प्राप्तत्वात् । मानवे तु स्पष्टमुक्तं सायं प्रातरित्यादि । अन्ये तु नियमं मन्यन्ते । शक्तौ सत्यां गृहमेधिनोरुभयोरपि कालयोरवश्यं मोक्तव्यं प्राणाग्निहोत्रस्यालोपाय । तथा च बोधायनो [ २, १३, ९ ] । गृहस्थो ब्रह्मचारी वा योनश्नंस्तु तपश्चरेत् प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु स इति ॥

५. अविशेषेणोभयोरपि कालयोः प्राप्तावाह औपवस्तेत्यादि । यत्कालान्तर एकस्मिन्काले भोजनं तदप्यौपवस्तमेवोपवास एव । औपवस्तं तूपवास इति निघण्टुः। तदपि दिवा न रात्रौ श्रौतेषु तथादर्शनात् । .......... ॥

७. एतस्मिन्नहनीति न वक्तव्यं [1]प्रकृतत्वात् । यथा तृप्तिश्चान्नस्य भवति पर्वस्वेवमिदमपि भविष्यति । किंच पर्वस्वितिबहुवचनान्तस्य प्रकृतस्यैतस्मिन्नहनीत्येकवचनान्तेन प्रत्ययमर्शोपि नातीव सामञ्जसो भवति तस्माद् व्यवहितमपि पाणिग्रहणमहः प्रत्ययमृश्यते । तदर्थमेव गृह्ये [ ८, ७ ] । एतदहर्विजानीयाद्यदहर्भार्यामावहत इत्युक्तम् । एतस्मिन्पाणिग्रहणेहनि यदेनयोर्दंपत्योः प्रियं स्यात्तद्भुञ्जीयातां न तु नात्मार्थमभिरूपमन्नं पाचयेदिति [ २, ८, ४ ] निषेधस्यायं विषय इति । प्रतिसंवत्सरं चैतत्कर्तव्यमिति । यथा चैत्रे मासे स्वातौ कृतविवाहस्यापरस्मिन्नपि संवत्सरे तस्मिन्मासे स्वातावेव कार्यमेवं तदेतदहरिति भवति । प्रतिमासं तु नक्षत्रागमे चैत्रादिभेदान्न तदेवेतिप्रतिपत्तिः । तस्मात्प्रतिवत्सरमिदं विवाहनक्षत्रे कर्तव्यं यथा राज्ञामभिषेकनक्षत्रमेवं हि गृहमेधिनोर्विवाहनक्षत्रमिति ॥

८. एतस्मिन्नेवाहनि स्थण्डिलशायिनौ स्याताम् ॥

११. तस्योपचारः स्थालीपाकस्य प्रयोगप्रकारः पार्वणेन व्याख्यातः । एतदेव ज्ञापयति न सामयाचारिकेषु पार्वणातिदेशः प्रवर्तत इति । केचित्तु सर्वमेवैतत्पर्वविषयं मन्यन्ते । तेषामुक्तो दोषः पार्वणेन व्याख्यात इति चानुपपन्नं । न हि स एव तेन व्याख्यातो भवति । श्वोभूते स्थालीपाक इति च व्यर्थम् । उपोषिताभ्यां पर्वसु कार्य इति पूर्वमेव विहितत्वात् । एतदहर्विजानीयादिति चास्य प्रयोजनं तत्पक्षे चिन्त्यम् ॥

१२. लोके शिष्टाचारसिद्धमेतत्कर्म नित्यं प्रतिसंवत्सरं कर्तव्यमिति शिष्टा उपदिशन्ति । अपर आह वक्ष्यमाणं कर्म शिष्टाचारसिद्धं नित्यं सार्वत्रिकं शिष्टा उपदिशन्तीति ॥

---

[1] अप्रकृतत्वात् G. U[2]

१३. होमप्रसङ्गादिदमुच्यते । ........ उपसमिन्ध्यादुपसमिन्धीत काष्ठैरग्निं प्रज्वालयेत् । तत्र पुरस्तादुदगपवर्ग इति परिभाषितमुपदेशकमाच । प्राचीर्लेखाः पूर्वं लेखनीयाः । एवं चेदं कर्म लेखनकारणं नाम स्थण्डिलसंस्काररूपम् । ततश्च प्राचीः पूर्वं दक्षिणारम्भमुदक्संस्थमालिखेत् । अथोदीचीः पुरःसंस्थं दक्षिणारम्भमालिखेत् । अन्ये तु प्राचीरुदगारम्भं दक्षिणान्तमालिखन्ति ॥

१५. .......एतद्गृहमेधिनोरितिवचनमस्मिन्कर्मणि स्वयंकर्तृत्वं स्यात्प्रयोजकत्वं मा भूदिति । अन्य आह पुनर्गृहमेधिनोरितिवचनात्पूर्वसूत्रं ब्रह्मचारिणोपि विषये सावित्र्या समित्सहस्रमादध्यादित्यादौ भवति पाके तु क्रिया न भवति । उपसमाधास्यमितिलिङ्गस्य विवक्षितत्वात् । आर्याः प्रयता [ २, ३, ७ ] इत्यत्र तु भवति ॥

१६. संवेशनं मैथुनम् । तदहनि न कर्तव्यम् ॥

१८. अन्तरालं मध्यम् । ऋत्वोरन्तराले मध्येपि संनिपातः स्याद्दार एव सकामे सति । ........ ।अनुमतमित्यनुवृत्तेः प्रतिषिद्धेषु दिनेषु न भवति ॥

१९. तदिदमनन्तरोक्तं संनिवेशनम् । तत्र ब्राह्मणवचनं प्रमाणम् । कामसा विजनितोः संभवामेति [ तैत्ति० सं० २, ५, १, २ ] ॥

२० एवकारो भिन्नक्रमः । स्त्र्युपभोगार्थं वासः स्त्रीवासस्तेन संनिपातः स्यात् । न तेन प्रक्षालितेनापि ब्रह्मयज्ञादि कृत्यम् ॥

---

## PAṬALA I KAṆḌIKĀ 2.

१. यदि वा रेतसो रजसश्च ये लेपास्तानद्भिर्मृदा प्रक्षाल्याचम्याङ्गानां शिरःप्रभृतीनां प्रोक्षणं कर्तव्यम् । ऋतौ व्यवस्था यावता प्रयतो [1]मन्येत ॥

३. ततः सुखानुभवानन्तरं परिवृत्तिरिह लोके जन्म भवति तस्यां च कर्मणो यः फलशेषोननुभुक्तोशस्तेन जातिं ब्राह्मणादिकां विशिष्टे या कुले जन्म ........... वर्णं हेमादितुल्यम् । .......मेधां ग्रन्थधारणशक्तिम् । प्रज्ञामर्थधारणशक्तिम् ।.... ॥

४. शरीरोत्पत्तिसंस्कारा अध्ययनापेक्षा इति दर्शयितुं दृष्टान्तमाह यथेत्यादि । फलोपोत्र द्रष्टव्यः ........ ॥

[1] दृषितो भवम्या G U[1], इन्द्रियकाले G U[2]

६. दोषपरिवृद्धावुदाहरणमाह स्तेनेति । स्तेनः सुवर्णचोरः । अभिशस्तो ब्रह्महा । स्तेनोऽभिशस्तो वा ब्राह्मणादिरमुष्मिँल्लोके परिमिते निरये दोषफलमनुभूय तस्मिन्वृत्ते परिक्षीणे ब्राह्मणश्चाण्डालो जायते । शूद्राद् ब्राह्मण्यां जातश्चाण्डालः । राजन्यः पौल्कसः । शूद्रात्क्षत्रियायां जातः पौल्कसः । प्रज्ञादित्वादण् [पा० ५, ४, ३८ ] । वैश्यो वैणो जायते । वेणुना नर्तको वैणः ॥

७. वर्णपरिध्वंसा वर्णेभ्यः प्रच्यवनं तस्यां वर्णपरिध्वंसायां यथा ब्राह्मणाद्याश्चाण्डालाद्या जायन्त एतेन प्रकारेण स्तेनाभिशस्ताभ्यामन्ये दोषफलैः कर्मभिर्दोषफलासु सूकरादियोनिषु जायन्ते परिध्वंसा स्वजातिभ्रष्टाः सन्त इत्यर्थः । ते तथावगन्तव्या इति ॥

---

## PAṬALA II., KAṆḌIKĀ 3

१. आर्यास्त्रैवर्णिकाः । ....... । प्रयताः स्नानादिना शुद्धा वैश्वदेवे गृहमेधिनोर्भोजनार्थे पाके । गृहमेधिनोर्यदशनीयस्येति [ सू० १२ ] दर्शनात् । अन्नसंस्कर्तारः स्युरन्नं भक्ष्यभोज्यपेयादिकं संस्कुर्युः । न स्वयं नापि स्त्रियः ॥

२. ....... संस्कर्तारः स्युरितिबहुवचने प्रकृते वर्जयेदित्येकवचनं प्रत्येकमुपदेशार्थम् ॥

३. केशादीनात्मीयानन्यदीयान्वालभ्य स्पृष्ट्वाप उपस्पृशेत् । नेदं स्नानम् । किं तर्हि । स्पर्शनमात्रम् । केशालम्भे पूर्वमप्युपस्पर्शनं विहितम् [ १, १६, १५ ] । इदं तु वचनं तत्रोक्तं वैकल्पिकं शङ्कदाद्युपस्पर्शनं मा भूदिति ॥

५. तेषां शूद्राणामन्नसंस्काराधिकृतानां स एवाचमनकल्पो वेदितव्यो यस्यान्नं पचन्ति यदि ब्राह्मणस्य हृदयंगमाभिरद्भिर्यदि क्षत्रियस्य कण्ठगताभिरद्भिर्यदि वैश्यस्य तालुगताभिरद्भिरिन्द्रियोपस्पर्शनं च भवति ॥

६. ..........इदमेषामधिकमार्येभ्यः ॥

७. सहैव वाससा स्नानं कुर्युः । आर्याणां तु परिहितं वासो निधाय कौपीनाच्छादनमात्रेणापि स्नानं भवति शूद्राणामपि पाकादन्यत्र । ....... ॥

९. यदि शूद्राः परोक्षमन्नं संस्कुर्युरार्यैरनधिष्ठितास्तदा तत्परोक्षमन्नं संस्कृतं स्वयमग्नावधिश्रयेत् । अधिश्रित्याद्भिः प्रोक्षेत् । तदेवंभूतमन्नं देवपवित्रमित्याचक्षते देवानामपि तत्पवित्रं किं पुनर्मनुष्याणामिति ॥

११. ....... । विराड् विराजः साधनम् । ....... ॥

१३. ....... उपयोक्तुरेव व्रतमध्ययनाङ्गत्वात् । अन्ये तु पत्न्या अपीच्छन्ति । उपयोगः प्रथमः प्रयोगस्तत्र पत्न्या अपि सहाधिकारं वदन्तः ॥

१४. उत्तमेन वैहायसमिति वक्ष्यमाणस्य [२,४,८] ये भूताः प्रचरन्तीत्यस्यैक-रात्रमुपवासः कर्तव्यः ॥

१५. बलीनां मध्ये तस्य तस्य बलेर्देशे संस्कारः कर्तव्यः । कः पुनरसौ । हस्तेन परिमार्जनमवोक्षणं च । वरकृत्वा बलिं निवपति । न्युप्य पश्चात्परिषेचनं कर्तव्यम् । उपदेशक्रमादेव सिद्धे पश्चाद्ग्रहणं मध्ये गन्धमाल्यादिदानार्थमित्याहुः । तस्य तस्येतिवचनं सत्यपि संभवे सकृदेव परिमार्जनमवोक्षणं च मा भूत् । एकस्मिन्देशे समवेतानामपि पृथक्पृथगन्यथा स्यादिति ॥

१६. यत्र पच्यते स पचनः । औपासनवत औपासने विधुरस्य पचन इति व्यवस्थितो विकल्पः । अन्ये तु तुल्यविकल्पं मन्यन्ते । षड्भिराद्यैः । अग्नये स्वाहा सोमाय स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा ध्रुवाय भूमाय स्वाहा ध्रुवक्षितये स्वाहा अच्युतक्षितये स्वाहेत्येतैः । एते हि मन्त्रपाठे पठिताः । प्राग्विवाह-मन्त्रेभ्यो विशिष्टनियममापेक्षग्रहणत्वात्तैः सह न गृह्यन्ते । केचित्सौविष्टकृतमपि सप्तमं जुह्वति । अग्नये स्विष्टकृते स्वाहेत्योपधिहविष्षेषु सर्वत्र तस्य प्रवृत्तिरिति वदन्तः । अन्ये तु सोमाय स्वाहेति न पठन्ति सौविष्टकृतं षष्ठं पठन्ति । हस्त-ग्रहणं दर्व्यादिनिवृत्त्यर्थम् ॥

१७. उभयतः पुरस्तादुपरिष्टाच्च परिषेचनं कर्तव्यम् । कथम् । यथा पुर-स्तादुक्तं गृह्ये [२, ३, ८,] । अदितेनुमन्यस्वेत्यादि । अदितेन्वमँस्था देव सवितः प्रासावीरित्यन्तम् । सामयाचारिकेषु पार्वणाविदेशो न प्रवर्तत इति ज्ञापितत्वाद-प्राप्तविधिरयम् । अन्ये तु परिसंख्यां मन्यन्ते परिषेचनमेव वैश्वदेवे नान्यत्तन्त्र-मिति ॥

१९. सति सूपे तत्संसृष्टा बलयः कार्याः । अन्ये त्वन्यैरपि व्यञ्जनैः संसर्ग-मिच्छन्ति । ......... ॥

२०. अपरेणाग्निमग्नेः पश्चात्सप्तमाष्टमाभ्यां धर्माय स्वाहा अधर्माय स्वाहे-त्येताभ्यां बलिहरणं कार्यम् । उदगपवर्गं न प्रागपवर्गम् ॥

२१. उदकं यत्र धीयते तदुदधानं मणिकाख्यम् । ...... । अद्भ्यः स्वाहे-त्येतेन ॥

२२. ........ ओषधिवनस्पतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहेत्येताभ्याम् ॥

२३. .......... गृहाभ्यः स्वाहा अवसानेभ्यः स्वाहा अवसानपतिभ्यः स्वाहा सर्वभूतेभ्यः स्वाहेत्येतैः प्रागपवर्गमित्येव ॥

---

## PATALA II, KANDIKĀ 4

१. शय्यादेशे कामाय स्वाहा ॥

२. देहलीद्वारस्याधस्तादारु । तस्याधो वेदिकेत्यन्ये । अन्तर्द्वारस्य च ग्रहणं नत्रान्तरित्यनेन लिङ्गेन । अन्तरिक्षाय स्वाहेति ॥

३. येनापिधीयते द्वारं सा पिधानी कपाटम् । तदर्गलमित्यन्ये । तत्रोत्तरेण मन्त्रेण यदेजति जगति यच्च चेष्टति नाम्नो भागोयं नाम्ने स्वाहेत्यनेन ॥

४. अगारस्येत्यनुवृत्तेस्तस्य यो ब्रह्मसदनाख्यो देशो वास्तुविद्याया प्रसिद्ध-स्तत्रोत्तरैर्दशभिः पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहा इन्द्राय स्वाहा बृहस्पतये स्वाहा प्रजापये स्वाहा ब्रह्मणे स्वाहा प्रागपवर्गमेव । अपर आह मध्येगारस्येत्यत्र देशस्योपयुक्तत्वाद् ब्रह्मा यत्र सीदति गार्ह्येषु कर्मस्वग्नेर्दक्षिणतो ब्रह्मसदनं तत्रेति ॥

५. अनन्तराणां बलीनां दक्षिणतः पितृलिङ्गेन स्वधा पितृभ्य इत्यनेन बलिं कुर्यात् । प्राचीनावीत्यवाचीनपाणिश्च भूत्वा दक्षिणं पाणिमुत्तानं कृत्वाङ्गुष्ठतर्जन्यो-रन्तरालेन ॥

६. पितृबलेरुत्तरतो रौद्रो बलिः कर्तव्यो यथा देवताभ्यस्तथा प्राचीनावीत्यवा-चीनपाणिरिति नानुवर्तत इत्यर्थः । नमो रुद्राय पशुपतये स्वाहेतिमन्त्रः । तत्र यद्यपि पशुपतिलिङ्गमप्यस्ति तथापि रुद्रस्यैव विशेषणमिति रौद्र इतिव्यपदेशो नानुपपन्नः । देवतास्मरणमपि रुद्रायेत्येव कुर्वन्ति । रुद्राय पशुपतय इत्यन्ये । केचित्तूत्तरतो मन्त्रो रौद्रो न पशुपतिदैवत्य इत्याचक्षते तेषां मते देशः प्राग्वोदग्वा विस्यात् ॥

७. .......... शुनः । धर्मभेदात् । पित्र्यस्याप्रदक्षिणं परिषेचनमितरस्य देवत्वात्प्रदक्षिणमिति ॥

८. उत्तमेन ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः

तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्ददातु स्वाहेत्यनेन वैहायसं बलिं दद्यात्। तं च नक्तमेव। वैहायसमितिवचनादाकाश एव बलिरुत्क्षेप्यः। न च्छदिष्परिष्कृते देशे। ...... अपर आह। एवकारो भिन्नक्रमः नक्तमुत्तमेनैव बलिरिति बल्यन्तराणां रात्रौ निवृत्तिः। अन्ये तूहेन दिवा बलिं हरन्ति 'ये भूताः प्रचरन्ति दिवा बलिमिच्छन्त' इति। आश्वलायनके तथा दर्शनात्। 'दिवाचारिभ्य इति दिवा नक्तंचारिभ्य इति नक्तमिति [ आ० गृ० सू० १, २, ८–९] । .......... ॥

१०. बलिहरणानन्तरमन्नं च देयं भिक्षवे ॥

१२. .......... अन्तर्वत्नीरित्येव सिद्धे क्षीमहणं स्वस्रादीनामपि ग्रहणार्थम्। अन्तर्वत्नीग्रहणं सर्वपूजार्थम् ॥

१३. काले वैश्वदेवान्ते।.......... ॥

१४. .......... इतिशब्दप्रयोगादेवं धर्मज्ञा उपदिशन्ति ॥

१७. यदि पुनरसावनधीयानोपि 'दशवर्षं पौरसख्य'मित्यादिनाभि-[१,१४,१३] वाद्यो भवति तदाभिवादनायैवोत्तिष्ठेत् ॥

१८. राजन्यवैश्यावधीयानावपि न प्रत्युत्तिष्ठेद् ब्राह्मणः। आसनादिकं तु देयमिति ॥

२०. अथवा यस्य गृहमेधिनो दासास्ते राजकुलादाहृत्य तं शूद्रमतिथिवत्पूजयेयुः। अत एव ज्ञायते शूद्राणामतिथीनां पूजार्थं व्रीह्यादिकं ग्रामे ग्रामे राज्ञा स्थाप्यमिति॥

२१. उपासने गुरूणामित्यादिना केषुचित्कालेषु यज्ञोपवीतं विहितमिह तु प्रकरणाद्गृहस्थस्य नित्यमुत्तरं वासः कार्यमित्युच्यते ॥

२२. अपि वा सूत्रमेव सर्वेषामुपवीतकृत्ये भवति न वास एव।........ ॥

२३. .......... शिवं सर्वसमृद्धं भवतीति ॥

२४. तुशब्दोवधारणार्थो भिन्नक्रमश्च। ब्राह्मण एव सर्वेषामाचार्यः स्मर्यते धर्मशास्त्रेषु। .......... ॥

---

## PAṬALA II., KAṆḌIKĀ 5.

१. कर्मणि षष्ठी। सर्वविद्याङ्गविद्या अप्युपनिषद उपाकृत्याध्येतुमारभ्य तद्दहरत्यध्ययनं। तस्मिन्नहन्यध्ययनं न कर्तव्यम्। उपनिषद्ग्रहणं प्राधान्यस्यापनार्थं

ब्राह्मणा आयाता वसिष्ठा आयाता इतिवत् ॥

२. अधीत्य वेदमधीत्य स्नास्यन्नित्यस्मिन्नवसर आचार्यसकाशात्सद्यो विप्रक्रमणं न कर्तव्यं नापगन्तव्यम् । प्रायेण मकारात्परमिकारमधीयते तत्राप्येष एवार्थः । इकारश्छान्दसोपपाठो वा ॥

४. ......... उपसंगृह्य यद्यपि तस्य चाण्डालादिस्पर्शः संभाव्यते तथापि न वीभत्समान उदकमुपस्पृशेत् । न स्नायात् । उपसंग्रहणे वा धूलिधूसरौ पादौ स्पृष्ट्वा न वीभत्समान उदकमुपस्पृशेत् ततस्तं पुरस्कृत्य गृहप्रवेशमेव कृत्वा पूजासाधनान्युपस्थाप्य यथोपदेशं गृह्योक्तमार्गेण मधुपर्केण पूजयेत् । पूजाविधान गृह्योक्तस्यानुवादः ।आसनादिषु विशेषं वक्तुमाह ॥

५.........तत्सन्निदेशान्नीच आसने गुणतोपि निकृष्ट आसीत ॥

६. तिष्ठन्निति प्रह्व उच्यते स्थानयोगात् । न हि साक्षात्तिष्ठन्नाचामयितुं प्रभवति । सव्येन पाणिना करकादिकमनुगृह्याधस्ताद्गृहीत्वेतरेण करेण द्वारमवनम्येत्यर्थसिद्धत्वादनुक्तम् । एवं कृत्वाचार्यमाचामयेत्स्वयमेव शिष्यः । एवं हि स धर्मयुतो भवति । आचार्ये प्रकृते पुनराचार्यग्रहणमातिथ्यादन्यत्राप्याचार्यमाचामयन्नेवमेवाचामयेदिति ॥

७. वाशब्दः समुच्चये । अन्यमप्येवमाचामयेत् । स चेत्समुदेतः कुलशीलवृत्तविद्यावयोभिरुपेतो भवति ॥

८. व्यवहितमपि स्यादित्यपेक्ष्यते । ......... ॥

९. ......... निःशृङ्खणं नासिकामलनिःसारणम् । भ्रूक्षेपणं भ्रूविक्षेपः । छान्दसो ह्रस्वः ।......निष्फूर्जनमङ्गुलीस्फोटनम् । इतिशब्दादन्यदपि स्वैरासनादिकं वर्जयेदित्यपेक्ष्यते । एतानि मूत्रकर्मादीन्याचार्यसंनिधौ न कुर्यादिति ॥

१०. उपस्पर्शनमालिङ्गनमाघ्राणादि । भाषाः संभाषाश्चाटुप्रभृतयः । एता अप्याचार्ये संनिहिते दारप्रजाविषये विस्रब्धं न कुर्यात् । ज्वरादिपरीक्षायां न दोषः ॥

१३. .........परीवादान्दोषवादानाक्रोशानश्लीलवादान् । परीवादस्य पुनःपुनर्वचनमतिशयार्थम् ॥

१४. परीवादाक्रोशांश्च वर्जयेत् । ऋग्वेद एव श्रोत्रसुखोन्ये श्रवणकटुका इतिपरीवादः । तैत्तिरीयमुच्छिष्टशाखा याज्ञवल्क्यादीनि ब्राह्मणानीदानींतनानीत्याक्रोशः ॥

१५. यया विद्ययाधीतया श्रुतया वा न विरोचेत न यशस्वी स्यात् तामि-त्यर्थाद्गम्यते । .... ...... ॥

१७. ऋतुकाल एव वा जायामुपेयात् । ऋत्व इति रूपसिद्धिः । स्त्रीणामृतु-दिनानि षोडश । तत्र भवः काल ऋत्व्यः । भवे छन्दसीति [ पा० ४,४,११० ] यत्प्रत्यय ऋत्व्यवास्त्व्येति [ पा० ६, ४, १७५ ] सूत्रे यणादेशो निपातितः । तत्रैव यलोपश्छान्दसः । चातुर्मास्येषु प्रयुक्तमृत्वे वा जायां नोपर्यात्त इति ॥

१८. येन प्रकारेणागमः पाठार्थयोस्तथैव शिष्येभ्यो निर्मत्सरेण विद्या सं-प्रदेया । एवभूते विद्यासंप्रदाने युक्तोवहितः स्यात् । ये च गृहस्थस्य नियमा अध्यापनेन्यत्र च तेष्वपि युक्तः स्यात् ॥

१९. यैः पुरुषः आस्राव्यते बहिराकृष्यते त आस्रवाः शब्दादयो विषयाः । ते विशिष्यन्ते । त्वक्शिश्नोदरारम्भणान् । आरभ्यन्त आलभ्यन्त इत्यारम्भणाः । तत्र त्वगालम्भनाः स्रक्चन्दनादयः । शिश्नालम्भनाः स्त्र्युपभोगादयः । उदरालम्भना भक्ष्यभोज्यादयः । उपलक्षणं त्वगादिग्रहणम् । एवंभूतानास्रावान्मनआदिभिः पञ्चेन्द्रियैः परिवृञ्जानः सर्वतो वर्जयन्नमृतत्वाय कल्पते । तत्र वागिति रसनेन्द्रियमाह प्राण इति घ्राणम्[1] ॥

---

## PATALA III, KANDIKĀ 6.

२. साधुतां चेत्प्रतिजानीते साधुजन्मास्म्यमुष्य पुत्रोऽमुष्य नप्ता साध्वाचार आस्मीति पित्रैवोपनायितोऽपि शिक्षिताचारश्चास्मि सम्यक् चार्वाविधं विधिबलेन तु बाल्य एव सर्वे दिष्टां गतिं गताः । एतस्मात्केवलमनधीतवेद इति । ततोऽभिरूपद्रष्टेत्यादिकं मन्त्रमुक्त्वा शास्तुं शासितुमध्यापयितुं धर्मांश्चोपदेष्टुं प्रतिपद्येतोपक्रमेत ॥

३. पञ्चयज्ञान्तेऽतिथीनेव भोजयेदित्युक्तं तत्प्रकारं वक्तुं तस्यावश्यंकर्तव्यता-मनेनाह । अतिथिर्गृहानभ्यागच्छन्नग्निरिव ज्वलन्नभ्यागच्छति तस्माद्भोजनादिभि-रवश्य तर्पयितव्यः, निराशस्तु गतो गृहं दहेदिति ॥

४. इदानीमतिथिलक्षणं वक्तुं तदुपयोगि श्रोत्रियलक्षणमाह । धर्मेणेत्यादि ।

---

[1] प्राणम् G U[1].

विद्यार्थस्य यो नियमः स धर्मः । तेन च वेदानां काचन शाखामधीत्य श्रोत्रियो भवति । पुरुषस्य हि प्रतिवेदमेकैका शाखा भवति या पूर्वैः प्रतिगृहीताध्ययनानुष्ठानाभ्यां सा प्रतिवेदं स्वशाखा । तामधीत्य श्रोत्रियो भवति । न तु प्रतिवेदमेकैकामधीत्य श्रोत्रियो भवतीति लोकविरोधात् । लोके हि यां कांचनैकामेव शाखामधीत्य श्रोत्रिय इति प्रसिद्धः ॥

५. आदितो यच्छब्दो द्रष्टव्योन्ते स इतिदर्शनात् । मध्ये श्रोत्रियलक्षणोपदेशात्तदुपजीवनेन सूत्रं योज्यम् । यः श्रोत्रियः स्वधर्मसंयुक्तं स्वधर्मनिरतं कुटुम्बिन भार्यया सह वसन्तम् ।....धर्मपुरस्कार आचार्यस्यार्थे भिक्षणं धर्मस्तत्पुरस्करोतीति धर्मपुरस्कारः ।......॥

६. ......शान्तिरुपद्रवाणामभावः ।......॥

७. ......यथावयो वयसोनुरूपं प्रत्युत्थानाभिवादनादिना समेयात्संगच्छेत । समेत्य च तस्यासनमाहारयेच्छिष्यादिभिः । तदभावे स्वयमेवाहरेत् ॥

८. ......बहुपादमेव पीठादिकमित्येके मन्यन्ते स्वमतं च बहुपादमपीति ॥

९. तस्य पादौ स्वयं प्रक्षालयेत् । द्वौ शूद्रौ प्रक्षालयेतामित्येके मन्यन्ते । दासवत इदम् ॥

१०. अभिषेचनं करकादिना जलावसेकः । तमेकः कुर्यात् । इतरः प्रक्षालनम् ॥

११. मृन्मयेन पात्रेण तस्योदकमाहर्तव्यमित्येके मन्यन्ते । स्वयं तु तैजसेन ।

१२. यदासमावृत्तो ब्रह्मचार्याचार्यप्रेपितः स्वयमेव वातिथिरभ्यागच्छति तदा नामावुदकमाहारयेत् । नासावुदकाहरणस्य प्रयोजकः । नास्मा उदकमाहर्तव्यमिति ॥

१३. अत्रासमावृत्तेतिथावध्ययनसांवृत्तिरधिकेतरस्मादतिथेः । अध्ययनस्य सहनिष्पादनमध्ययनसांवृत्तिः । यः प्रदेशस्तस्यागच्छति स तेन सह कियन्तं कंचित्कालं वक्तव्य इति । प्रसिद्धे तु पाठे पूर्वपदान्तस्य समोकारस्य च्छान्दसो दीर्घः[1]॥

१४. ततः पादप्रक्षालनस्य सहाध्ययनस्य चानन्तरमतिथिं प्रियवचनेन सान्त्वयेत् । सान्त्वयित्वा गव्यादिभी रसैः फलादिभिर्भक्ष्यैरन्नतोद्भिरपि तर्पयेत्तृप्तिं

[1] पूर्वपदान्तस्य समोकारस्य च छान्दसो दीर्घः । G. U.[1] which reading points to अध्ययनासांवृत्तिः

कुर्यात् । अवरार्घ्येनेति जघन्यकल्पनां सूचयति । अद्भिरप्यन्तत इत्यर्थः । इतिशब्दादेवमादिभिरन्यैरपि ॥

१५. आवसथो विश्रामस्थानम् । उपरिशय्या खट्वा । उपस्तरणं तूलिका । उपधानमुपबर्हणम् । अवस्तरणमुपरिपटः । तत्सहितमुपधानम् । अभ्यञ्जनं पादयोस्तैलं घृतं वा । तत्सर्वं दद्याद्भोजनात्प्रागूर्ध्वं वापेक्षिते काले । इतिशब्दादन्यदप्यपेक्षितम् ॥

१६. .......व्रीहियवग्रहणमुपलक्षणम् । इदं भुक्तवत्सु सर्वेष्वतिथिषूपस्थिते द्रष्टव्यम् ॥

१७. भोजनकाले त्वाह उद्धृतानीत्यादि । यावन्तो भोक्तारस्तावन्त्यन्नान्युद्धृत्य पृथक्पात्रेषु कुर्यात् । स्वयं संविभागं कृत्वा तान्यन्नान्यवेक्षेत । किमिदं भूयः प्रभूतमिदं वेति विचारे प्लुतः । पूर्वं तु भाषायामित्येतदवेक्षितम् । छान्दस एवायं प्रयोगः ॥

---

## PAṬALA III., KAṆḌIKĀ 7.

१. स एषोभिहितो मनुष्ययज्ञः । प्राजापत्यः प्रजापतिना सृष्टस्तद्दैवत्यो वा........ ॥

२. योतिथीनां जाठरोग्निः स आहवनीयः। तत्र हि हूयते। यः कुटुम्बे गृहेग्निरौपासनः स गार्हपत्यो नित्यधार्यत्वात् । यस्मिन्पच्यते लौकिकाग्निः सोन्वाहार्यपचनो दक्षिणाग्निः । तत्र ह्यन्वाहार्यं पच्यते ॥

३. .......ऊर्गन्नमिष्टमग्निहोत्रादि पूर्तं स्मार्तं कर्म तडागारामादि ।

४. पय उपसेचनं यस्य तदन्नमग्निष्टोमसंमितम् । ........आयुषश्च । वृद्धिरुपसमस्तमपि वृद्धिरिति संबध्यते ॥

५. अप्रिया उदासीना द्विषतो निषिद्धत्वात् ॥

६. त्रिषु कालेषु दीयमानान्यन्नादीन्यस्य यज्ञस्य प्रातःसवनादीनि त्रीणि भवन्ति । तस्मात्सर्वेषु कालेषु दातव्यमिति ॥

७. यदन्तुमुत्तिष्ठन्तमनूत्तिष्ठति तदुदवसयत्येयोदवसानीया सास्य यज्ञस्य । प्रायेणोच्छब्दं शिष्टा न पठन्ति केवलमनुशब्दमेव पठन्ति ॥

८. यस्मात्स्ययति प्रशंसति सा प्रशंसा दक्षिणा ॥

९ ससाधनमनुव्रजनम् ॥

११ इतिब्राह्मणमित्यस्य सर्वेण सम्बन्ध ॥

१२ राजाभिषिक्त क्षत्रियोसावतिथयेभ्यागतायात्मनोपि सकाशाच्छ्रेयसीं पूजा कारयेत्पुरोहितेन ॥

१३ अत्र स्वयमितिवचनादनाहिताग्निरन्येन शिष्यादिना कारयन्नपि न दुष्यति । अभ्युदेत्य ब्रूयाद् व्रात्य क्वावात्सीरितिकुशलप्रश्न । व्रतं सुकृत साधु व्रतेत्य स एव व्रात्य इतिपूजाभिधानम् । क पूर्वस्या रात्रावुषितवानसि । व्रात्या-दकमित्युदकदानम् । व्रात्य तर्पयस्त्विति गोरसादिभिस्तर्पणम् । अनुस्वारसकारौ छान्दसौ । क्रियाभेदात्प्रतिमन्त्रमितिशब्द । एतत्सर्वेषु कालेषु कर्तव्यम् ॥

१४ स यदि होमकालेप्यासीत तदा पुरा होमादपरेणाग्नि दर्भेषु सादयित्वा उपांशु जपेद् ब्रूयात् । तत्र प्रतिमन्त्रमितिशब्दप्रयोगादर्थभेदा चतुर्णां विकल्प । समुच्चय इत्यन्ये । अत्राध्वर्युर्यजमानो वा होता स जपस्ततो जुहुयात् ॥

१५ उद्धृतेष्विति वहुवचन सभ्यावसथ्यापेक्षम् । यस्याग्नयस्त्रयस्तस्याप्युद्धृते ष्वित्यनेन सामानाधिकरण्यम् । होमा हि त्रिष्वपि भवन्ति । तनाहवनीयहोमा नन्तरमतिथावागतेपि त्रिषु होमो न कृत इति वक्ष्यमाणो विधिर्भवत्येव । तस्य दोषमाथर्वणिकाना ब्राह्मणवाक्यमाह अथर्ववेदे [ १५ १२, ८–११ ] । तदत्र न पठित प्रत्येतव्यम् । अस्मिन्पक्षे स्वय होमो नियत ॥

१६ पृथिव्या भवॉल्लोकानभिनयति । द्वितीययान्तरिक्ष्यान् । चतुर्थ्या परावत अगस्य परा मात्रा येषु तानभिनयति । ॥

१७ विद्यादिभी रहितोसमुदेत । स चदतिथिरिति ब्रुवाण आगच्छेत्तदा तस्मा आसनादिक श्रोत्रियाय ददामीत्येव मनसि कृत्वा दद्यात् । एव ददतोस्य दान समृद्ध भवति श्रोत्रियायैव दत्त भवति ॥

---

## PRASNA PATALA IV KANDIKĀ 8

१ येन गृहस्थेनातिथि कृतावमथ स्यात्कृतनामो दत्तानाम स्यात् । द्वितीय यान्तरिक्ष्यानितिवचनात्स द्वितीयादिष्वह सु । न त प्रत्युत्तिष्ठेन । नाप्यासना त्प्रत्यवरोहेत् । स चेदस्मिन्नहनि पूर्वमेवाभिवादित । अनभिवादित त्वभिवादनाय प्रत्युत्तिष्ठेत्प्रत्यवरोहेच्च ॥

३. आगामिभ्योतिथिभ्यो यथा गृहे न किंचिदवशिष्यते तथा गव्यादयो रसा न भोज्याः। सद्यः संपादयितुमशक्यत्वाद्रसानाम् ॥

४. आत्मानमुद्दिश्याभिरूपमन्न स्वाद्वपूपादि न पाचयेत् ॥

७. एतद् गृह्यसूत्रे व्याख्यातम् [ १३, १०–२० ]....... ॥

१०. वेदाध्याय इत्यत्र विवक्षित वेदमाह षडङ्ग इत्यादि। षड्भिरङ्गैर्युक्तो वेदोत्र गृह्यत इति ॥

११. छन्दो वेदस्तत्कल्पयन्ति प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गकलापेनोपेतस्य कर्मणः प्रयोगकल्पनयोपस्कुरुत इति छन्दःकल्पः सूत्राणि। व्याकरणमर्थविशेषमाश्रित्य पदमन्वाचक्षाण पदपदार्थप्रतिपादनेन वेदस्योपकारक विद्यास्थानम्। सूर्यादीनि ज्योतींष्यधिकृत्य प्रवृत्त शास्त्र ज्योतिषम्। आदिवृद्ध्यभावे यत्नः कार्यः। तदप्यध्ययनोपयोगिनमनुष्ठानोपयोगिन च कालविशेष प्रतिपादयदुपकारकम्। निरुक्तमपि व्याकरणस्यैव कात्स्न्र्यम्। शीक्षा वर्णानां स्थानप्रयत्नादिकमध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकार च शिक्षयति। पृषोदरादित्वाद्दीर्घः। गायत्र्यादीनिच्छन्दांसि यया विचीयन्ते विविच्य ज्ञायन्ते सा छन्दोविचितिः। एतान्यङ्गानि। अङ्गमस्तवादङ्गत्वम्। "मुखं व्याकरणं तस्य ज्योतिष नेत्रमुच्यते। निरुक्त श्रोत्रमुदिष्ट छन्दासि विचितिः पदे। शीक्षा घ्राण तु वेदस्य हस्तौ कल्पान्प्रचक्षते। उपकारकत्वाच्चोक्त उपकारः ॥

१२. अत्र चोदयति शब्देत्यादि। शब्दार्थतया यान्यारभ्यन्ते न प्रत्यक्षादिप्रमाणगोचरतया तानि शब्दार्थारम्भणानि कर्माणि वैदिकान्यग्निहोत्रादीनि कर्माणि। तेषा समाम्नाय उपदेशस्तस्य समाप्तौ स यावता ग्रन्थजातेन समाप्तोनुष्ठानपर्यन्तो भवति तत्र वेदशब्दो वर्तते। वेदयति विन्दत्यनेनेति वा धर्ममिति। न च मन्त्रब्राह्मणमात्रेणानुष्ठानपर्यन्त उपदेशो भवति किंतु कल्पसूत्रैरपि सह ततश्च तेषामपि वेदस्वरूप एवानुप्रवेशात्पञ्चैवाङ्गानि तत्र षट्संख्या विप्रतिषिद्धेति परिहरति ॥

१३. अङ्गान्येव कल्पसूत्राणि न वेदरूपाणि पौरुषेयत्वस्मरणात्। यतिपयान्येव हि तेषु ब्राह्मणवाक्यानि भूयिष्ठानि स्ववाक्यानि। अङ्गाना च तेषा प्रधानवाचिभिः शब्दैरछन्दो वेदो ब्राह्मणमित्यादिभिर्व्यपदेशो न न्याय्य इति न्यायविदा सिद्धान्तः। तावेमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे स्पष्टतरं द्रष्टव्यौ। यदुक्त न मन्त्रब्राह्मणमात्रेण पूर्ण उपदेश इति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति। इह तु भगवानाचष्टा कल्पसूत्रकाराणामिव प्रयोगकल्पना

कुतोस्तीति । न्यायोपबृंहिताभ्यां मन्त्रब्राह्मणाभ्यामिति वक्तव्यं नान्या गतिः । एवं सति भवानपि यततां तादृशः स्यामिति ततो मन्त्रब्राह्मणाभ्यामेव पूर्णमेव भोत्स्यत इति ॥

१४. अतिथिमागतं केनचित्प्रकारेण निराकृत्य भोजने प्रवृत्तो यत्रगते भोजने यदवस्थाप्राप्ते भोजने स्मरेत् । धिङ् मया स निराकृत इति । तत्रैव भोजनाद्विरम्य तस्मिन्नहन्युपोष्य ॥

## PAṬALA IV, KANDIKĀ 9.

४. यदि तस्यान्यपरतयानुज्ञायां प्रतीभा बुद्धिर्न जायते । सीम्नि प्राप्तायां ततो निवर्तेत प्रवेर्दीर्घश्छान्दसः ॥

७. उपेतः कृतोपनयनोसमावृत्तः । .......तस्मात्केपुचिज्जनपदेपु भार्ययानुपेतेन च सह भोजनमाचरन्ति । तथाह बोधायनः [ १, २, ३ ] यानि दक्षिणतस्तानि व्याख्यास्यामः । तदनुपेतेन सह भोजनं स्त्रिया सह भोजनमिति । तस्य दुराचारत्वमनेन प्रतिपाद्यते ॥

९. विहारे यज्ञकर्मणि........ ॥

१०. ये नित्या भाक्तिका भक्तार्हा दासकर्मकरादयः । ....... ॥

११, दासो भूत्वा यः कर्म करोति स दासकर्मकरः।........॥

१२. कर्मस्वग्निहोत्रादिष्वर्जनेपु च यथा स्वयमसमर्थो भवति तथात्मानं नोपरुन्ध्यात्कुटुम्बी ॥

१३. ...... द्वात्रिंशद् मासा गृहस्थस्य । प्रथमार्थे द्वितीया ।........॥

## PAṬALA V. KANDIKĀ 10.

१. भिक्षणं याचनं तत्राचार्यादयो निमित्तम् । बुभूर्षा भर्तुमिच्छा । अर्हतो विद्यावतोग्निहोत्रादिनियमे योग्यस्यार्थाभावे तल्लोपः ॥

२. तत्रैवंभूते भिक्षणे याचतः श्रुतवृत्तादिकान्गुणान्समीक्ष्य शक्त्यनुरूपमवश्यं देयमदाने प्रत्यवायात् ।

४. ... ..पुत्रादिभ्यो दीयत इति दायः। तमादत्त इति दायादस्तस्य भावो दायाद्यं दायस्वीकारः।.......॥

५. अन्यद्यान्यकेनाप्यपरिगृहीतमारण्यमूलफलादि तेनापि जीवेदिति प्रकरणाद्गम्यते। एतेन विधिर्व्याख्यातः॥

७. गवां रक्षणं गोरक्ष्यम्। भावे ष्यत्प्रत्ययः। .....॥

८. .... ..पणमानं नाप्येतावद्देयमिति परिभाषमाणम्॥

१०. युद्धविषये तथा प्रतिपत्तव्यं यथा तद्योगा उपायमुपदिशन्ति तस्मिन्युद्धकर्मणि युद्धशास्त्रे वा येषामभियोगस्ते तद्योगाः॥

११ .. ..पराङावृत्तः पराङ्मुखः। .. ... न्यस्तायुधः प्रकीर्णकेश इति विसर्जनीयं केचिद्वदन्ति सोपपाठः[1]। पराङावृत्त इति ङकारश्छान्दसः।......॥

१२ यथाशास्त्रं गर्भाधानादिभिः संस्कारैः संस्कृताः शास्त्रैरधिगता अधिकृताः। तेषामिन्द्रियदौर्बल्यादजितेन्द्रियतया विप्रतिपन्नानां स्वकर्मच्युतानां निषिद्धेषु च प्रवृत्तानां शास्त्राचार्यादिनिर्देशं प्रायश्चित्तमुपदिशेत्। यथाकर्म कर्मानुरूपं यथोक्तं धर्मशास्त्रेषु॥

१४. स राजा पुरोहितं धर्मशास्त्रेष्वर्थशास्त्रेषु च कुशलं पुरोहितं गमयेत्। विनीयतामसाविति॥

१६. ततस्तान्नियमैर्बन्धनोपवासादिभिरुपशोषयेत्। बलविशेषेण बलानुरूपं वधदास्यवर्जं वधस्ताडनादिः। वधं दास्यं च वर्जयित्वा सर्वमन्यद्बन्धनादिकं कारयेयावत्ते मन्येरन्। चरेम प्रायश्चित्तमिति॥

---

## PATALA V, KANDIKĀ 11.

१. ......। अभिविधावाकारः॥

३. आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचित्य निरूप्य राजा दण्डाय प्रतिपद्येतोपक्रमेत॥

५. राजाऽनभिषिक्तः। स यदि ब्राह्मणेन समेतो न भवति तदा तस्य पन्था दातव्यः। अनभिषिक्तस्यानभिषिक्तेरेतदर्थमेवेदं वचनम्। अन्यत्र वर्णज्यायसा चेति (सू० ८) वक्ष्यमाणेनैव सिद्धम्॥

[1] This clause is omitted in G U[1].

६. आपदि शिष्यभूतब्राह्मणविषयमिदं शिष्यभूतेनापि ब्राह्मणेन समेत्य तस्यैव राज्ञः पन्था देयः ॥

७. ....... इतिशब्दात्भर्वैः स्थविरबालकृशादिभ्यश्च ॥

१२. श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु श्रद्धा शक्तिश्च धर्मसंपत्तिः पुत्रवत्वं प्रजासंपत्तिः । ....... ॥

१४. हि यस्मादाधाने सती विद्यमाना सहान्विता कर्मभिः संबध्यतेविक्रियते । कैः । येषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारकं तैः । अत्र दारे सतीतिवचनान्मृते तस्मिन्प्रागूर्ध्वं वाग्न्याधानात्सत्यामपि पुत्रसंपत्तौ धर्मसंपत्त्यर्थं दारग्रहणं भवत्येव । ....... ॥

१६ मातुर्योनिसंबन्धाः कन्याया मातुलादयः । चकारात्पितुरप्येवम् ।....... ॥

१७. ....... प्रजां दुहितरं सहत्वकर्मभ्यः सह कर्तव्यानि यानि कर्माणि तेभ्यस्तानि.......प्रजासहत्वकर्मभ्य इतिपाठे प्रजार्थं सहत्वकर्मार्थं चेति ॥

२० .......समो दीर्घः पूर्ववत् ॥

---

## PAṬALA V., KAṆḌIKĀ 12.

१. .......कन्यायै गृहक्षेत्राभरणादिदानेन नासुरः ॥

२. दुहितृमतः कन्यावतः पित्रादीन्प्रोथयित्वा प्रमथ्य यत्रावहेरन्स राक्षसो विवाहः ।.......द्वौ चावरौ विवाहौ शास्त्रान्तरेपूक्तौ । ....... ॥

५. ब्राह्मणस्य पाणिमभ्युक्ष्यमुपलिप्तं संमृष्टं वा भूप्रदेशमप्रोक्षितं नाभितिष्ठेत् प्रोक्ष्यैवाधितिष्ठेत् ॥

१०. पृथगवस्थितानामग्नीनामेकत्र संनिवापं समावेशनं न कुर्यात् । अग्नावग्निं न प्रक्षिपेदित्यन्ये ॥

१५. यावदङ्गानां ग्लानिर्भवति तावत्प्राणानायच्छेत् । प्राणवायुमाकृष्य धारयेत् । प्राणायामं कुर्यादित्येके मन्यन्ते । शक्त्यपेक्षो विकल्पः ।....... ॥

१८. नियमानासु"दङ्मुखो मूत्रं कुर्यादि"त्येवमादीनां व्यतिक्रमे घातमितोः प्राणमायच्छेदितिसर्वदोषः ॥

२२. आदितो द्वौ गर्तौ । कुनखी कृष्णनखः । श्यावा दन्ता यस्य स श्यावदन् विवर्णदन्तः । विभाषा श्यावारोकाभ्यामिति [ पा० ५, ४, १४४ ] दन्नादेशः । तस्य लोपश्छान्दसः । ज्येष्ठायामनूढायां पूर्वं कनीयस्या वोढाग्रेदिधिषुः पश्चादितरस्या वोढा दिधिषूपतिः । ज्येष्ठे त्वकृताधाने कृताधानः कनिष्ठः पर्याधाता ज्येष्ठः पर्याहितः । ज्येष्ठेऽकृतसोमयागे कृतसोमयागः कनिष्ठः परियष्टा ज्येष्ठः परीष्टः । अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः परिवेत्ता ज्येष्ठः परिवित्त इतिप्रसिद्धिः । यस्मिन्नगृहीतभागे कनिष्ठो भागं गृह्णाति स ज्येष्ठः परिविन्नः[1] कनिष्ठः परिविविदानः । चकारः पर्याधातृप्रभृतीनां समुच्चयार्थः । एतेष्वभिनिम्रुक्तादिषु योग्य उत्तरस्तस्मिन्द्वादशमासादिरशुचिकरनिर्वेशो यः पूर्वमुक्तस्तत्र तत्र गरीयान्भवति पूर्वत्र पूर्वत्र लघीयाल्लघीयान् अभिनिम्रुक्ताभ्युदितयोस्त्वनन्तरोक्तं प्रायश्चित्तद्वयमपि विकल्पेन भवति ॥

२३. यस्मिन्कौनख्यादिके लिङ्गे यत्प्रायश्चित्तमुक्तं तच्चरित्वा कौनख्यादिकं लिङ्गमुद्धरेदित्येके मन्यन्ते । "अन्यत्र दाराग्निभ्य" इतिस्मृत्यन्तरम् ॥

---

## PATALA VI, KANDIKĀ 13

१. सवर्णा चासावपूर्वा च शास्त्रविहिता चेतिकर्मधारयः । सवर्णा सजातीया ब्राह्मणस्य ब्राह्मणीत्यादि । अपूर्वामनन्यपूर्वामन्यस्मा अदत्तां न विद्यते पूर्वः पतिर्यस्या इति । शास्त्रविहिता शास्त्रोक्तेन विवाहसंस्कारेण संस्कृता "सगोत्राय दुहितरं न प्रयच्छे"दित्यादिशास्त्रानुगुणा [२, ११, १५]। एवंभूतायां भार्यायां यथर्तु गृह्योक्तेनर्तुगमनकल्पेन गच्छतो ये पुत्रा जायन्ते तेषां "स्वकर्म ब्राह्मणस्ये"त्यादिना [२, १, ४] पूर्वोक्तैः कर्मभिः संबन्धो भवतीति । गच्छथ इति थकारोपपाठः ॥

२. उभयोर्मातापित्रोर्दायेन च तेषां संबन्धो भवति । अव्यतिक्रमश्च । चेति चेदर्थे । अव्यतिक्रमश्चेद्यदि ते मातरं पितरं च न व्यतिक्रमेयुः । व्यतिक्रमे तु दायहानिरिति । अपर आह । उभयोरपि दायेन तेषां व्यतिक्रमो न कर्तव्यः अवश्यं देयो दायस्तेभ्य इति ।

३. अन्येन पाणिग्रहणेन वद्धती पूर्ववती । असंस्कृता विवाहसंस्काररहिता । वर्णान्तरं ब्राह्मणादेः क्षत्रियादिषु । पूर्ववत्यादिषु मैथुने सति दोषो भवति । कस्य। तयोरेव मिथुनीभवतोः ॥

---

[1] Before this sentence G U[1] insert ज्येष्ठभार्यामुपयच्छमान परिविन्न ... G U[1] Om कनिष्ठ.परिविविदान,—

४. तत्रेति पञ्चम्यास्त्रल्। इतराभ्योपि दृश्यन्त इति [पा० ५, ३, १४] ताभ्यामुभाभ्या पुत्र एवातिशयेन दोषवान्। तत्र पूर्ववत्यामुत्पन्नौ कुण्डगोलकौ "पत्यौ जीवती"त्यादि [मनुः ३, १७४]। असंस्कृतायामुत्पन्नस्य नामान्तर नास्ति किंतु दुष्टत्वमेव वर्णान्तरे जात्यन्तरम्। ...... ॥

५. "मनुः पुत्रेभ्यो दाय"मिति [२, १४, ११] दायविभाग वक्ष्यन्नन्यस्य भार्यायामन्येनोत्पादितः पुत्रः किमुत्पादयितुराहोस्वित्क्षेत्रिण इतिविचारे निर्णयमाह। उत्पादयितुरिति ॥

६. न केवलं ब्राह्मणमेव वैदिकीगाथा अप्युदाहरन्ति अथापीत्यादि। जनयितुः पुत्रः क्षेत्रिणो वा पुत्र इतिविवादे पराजितस्य क्षेत्रिणो वचनम्। एतावन्त कालं जनकोहमिति मन्यमान इदानीमेव स्त्रीणामीर्ष्यामि परपुरुषसंसर्गं न सहे। तदानीं कुत इति चेत् यदा यमस्य सादने पितृलोके जनयितुः पुत्रो भवति पुत्रकृत्यं परलोक गतस्य जनयितुरेव न क्षेत्रिणोमुवन्वर्भक्षाः। उक्त एवार्थः किंचिद्विशेषेणोच्यते। रेतोधा बीजप्रदः पुत्र नयति पुनदत्तं पिण्डादिकमात्मानं नयति प्रापयति परेत्य मृत्वा यमसादने पितृलोके तस्मात्कारणाद्भार्यां रक्षन्ति परेरेतसो बिभ्यन्तः। छान्दसो नुम् बिभ्यतः। अतो यूयमप्यप्रमत्ता अवहिता भूत्वैतं तन्तु प्रजामंतानं रक्षथ। लोडर्थे लड्क्षतेत्यर्थः। किमर्थम्। यो युष्माकं क्षेत्रे परेषां बीजानि परेतासि मावाप्सुः। व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः। मावाप्सतोप्तानि मा भूवन्मोप्येरन्। कथमिति। यस्मात्सांपराये परलोके जनयितुरेव पुत्रो भवति वेत्ता परिणेता क्षेत्री स्वेव तन्तुं कुटुम्बं मोघ निष्प्रयोजनं कुरुत आत्मसात्करोति। इतिशब्दो गाथासमाप्तौ। एतच्च क्षेत्रिणोनुज्ञानमन्तरेण पुत्रोत्पादनाविषयम्। यदा क्षेत्री रुग्णो वन्ध्यो वा मन्त्रायेयते मम क्षेत्रे पुत्रमुत्पादयेति यदा वा संतानक्षये विधवां नियुङ्क्ते यथा विचित्रवीर्यस्य क्षेत्रे सत्यवतीवाक्याद्व्यासेनोत्पन्नः पुत्रः[1]। उभयोरपि पुत्रो भवति बीजिनः क्षेत्रिणो द्व्यामुष्यायणश्च भवति। तथा चाचार्य एवाह [श्रौ० सू० १, ९, ७]। "यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षये"दिति। . ... ॥

७. यदि पूर्ववत्यादिषु मैथुने दोषः कथं तर्हि ऋतुभरद्वाजौ[2] व्यत्यस्य भार्ये जग्मतुर्वसिष्ठश्चाण्डालीमक्षमालां प्रजापतिश्च स्वा दुहितरम्। तत्राह। दृष्ट इत्यादि। सत्यं दृष्टोयमाचारः पूर्वेषां। स तु धर्मव्यतिक्रमो न धर्मो गृह्यमाणकारणत्वात्। . .... ॥

[1] क्षेत्रे सत्यवत्यामुत्पन्न G U[1],-G, U.[3] has a lacuna.

[2] उषस्यभरद्वाजौ G U[3]

९. तदिति 'नपुंसकमनपुंसकेने'त्येकशेष एकवद्भावश्च । तं व्यतिक्रमं । तत्र तेषां साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि प्रयुञ्जानोवर इदानींतनः सीदति प्रत्यवैति । .......॥

१०. दानग्रहणेन विक्रयोपि गृह्यते त्यागसाम्यात् । क्रयधर्म इति च प्रतिग्रहस्यापि ग्रहणं धर्मग्रहणात्स्वीकारसाम्याच्च । अपत्यस्य दानप्रतिग्रहक्रयविक्रया न कर्तव्याः । द्वादशविधेषु पुत्रेषु दत्तक्रीतयोरपि मन्वादिभिः पठितत्वान्नायं सामान्येन प्रतिषेधः किंतु ज्येष्ठपुत्रविषयः । एकपुत्रविषयः स्त्रीविषयो वा । तथा च वसिष्ठः "न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा न हि संतानाय पूर्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वादूरबान्धवं संनिकृष्टमेव प्रतिगृह्णीया"दिति । विश्वजिद्यागे च सर्वस्वदाने गवादिवदपत्यं न देयं विक्रयस्तु सर्वत्र निषिद्धः । तत्रोपपातकेषु याज्ञवल्क्यः [३. २३६] आह "नास्तिक्य"मित्यादि । बह्वृचब्राह्मणेपि शुनःशेपाख्याने दृश्यते [ ऐ० ब्रा० ७,१५ ] "स ज्येष्ठं पुत्रं निगृह्णान उवाचे"त्यादि । पुत्रप्रकरणेपत्यशब्दोपादानमपि ज्येष्ठपुत्रविषयं तस्य लिङ्गं न पतन्त्यनेनेत्यपत्यमिति । "ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुख"मिति [ वसिष्ठ० १७, १ ]॥

११. आर्षे विवाहे दुहितृमते दानं कश्चिद्वेदे श्रूयते तस्माद् दुहितृमते रथेन सार्धं गवां शतं देयं तत्र दुहितृमान्मिथुया कुर्यान्मिथ्या कुर्यात् । मा देवानां मिथुया कर्मभाग"मिति [ अथर्वसं० ४, २९, १ ] श्रूयते । मिथ्या कुर्यादिति कोर्थः । रथमेव पुनर्दद्यादिति । तदिदं दानं काम्यं कामनिमित्तं यथा युक्तो विवाहस्तथा युक्ता प्रजा भवन्तीति ( १, १२ ८ ) । ऋषितुल्याः पुत्राः स्युरिति । तच्च धर्मार्थं न क्रयार्थम् । यस्तु तस्यां विवाहक्रियायां क्रयशब्दः क्वचित्स्मृतौ दृश्यते स संस्तुतिमात्रं द्रव्यदानसाम्यान्न मुख्यक्रयत्वप्रतिपादनार्थम् । कुतः । हि यस्माद्धर्मादेव हेतोः संबन्धो दम्पत्योरिति । "आर्षे दुहितृमते मिथुनौ गावौ देया"वित्यत्राप्येष एव न्यायः । अत्र मनुः [ ३, ५४ ] । एतत्र दानं क्रयधर्मश्चापत्यस्य न विद्यत इत्यस्य व्यभिचारनिवृत्त्यर्थमुक्तम् ॥

---

[1] See Vâsishtha Dharma Sâstra XV. 30, where these Sûtras occur with a good many variants

## PATALA VI KANDIKĀ 14

१. अथ दायविभाग एकधनेत्यादि । एकेन प्रधानेन केनचिद्धनेन गवादिना ज्येष्ठ पुत्र तोषयित्वा तृप्त कृत्वा जीवन्नेव पुत्रेभ्यो दाय विभजेत्समम् । आत्मना परस्पर च तेषा सामान्याभिधानात् क्रमागत स्वयमर्जित क्लीबादीन् वर्जयित्वा । क्लीबादिग्रहण च जात्यन्धादीनामुपलक्षण यथाह मनु [ ९, २०१ ]। 'अनशौ क्लीबपतितौ जात्यन्धबधिरौ तथा उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रिया इति। अन्धादीना पुत्रसद्भावे ते स्वशहरा । एवमुन्मत्तपतितौ। वृत्त्यनिमित्ते क्लीबाद्यस्तु भर्तव्या । अथ विभागकाल स्मृत्यन्तरवशाद् ग्राह्य । अत्र नारद । [ १३, ३ ] "मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च निवृत्ते चापि रमणात्पितर्युपरतस्पृहे" इति। यदा च पुत्राणा पृथग्धर्मानुष्ठाने शक्तिश्रद्धे भवत सोपि कालस्त"स्माद्धर्म्या पृथक्क्रिये' ति [ मनु० ९ १११ ] दर्शनात् । जीवन्नितिवचन जीवन्नेवावश्य पुत्रान्विभजे देष धर्म' इतिप्रतिपादनायान्यथा तदनर्थकमजीवतोप्रसङ्गात् । स्मृत्यन्तरे तु स्वयमर्जिते पितुरिच्छया विषमविभागो दर्शितो न स धर्म्य इत्याचार्यस्य पक्ष । भार्याया अप्यशो न दर्शित । आत्मन एवाशस्तस्या अपीति मन्यते। वक्ष्यति च "जायापत्योर्न विभागो विद्यत" इति। केचित्तु पितुर्द्व्यंशावित्याहुः। "द्व्यंशौ प्रतिपद्येत विभजन्नात्मन पिते"तिदर्शनात । अयमप्याचार्यस्य पक्षो न भवति । यथा पुत्राणामेक एवाश सभार्याणा तथा पितुरपीति । अथ वा पुत्राणामेवाशसाम्यम् । आत्मनस्त्वाधिक्यपि न दोष । अत्र हारीत 'पितामयण पुत्रा इतरे सहा । यद्वाश्रयण स्कन्देदुपन्यस्येदितरेभ्योपि गृह्णीयादि ति । विभागादूर्ध्वं पित्रोर्जीवनाभावे पुत्रभागेभ्यो ग्राह्यमित्युक्त भवति । इति जीवद्विभाग ॥

२ अथ मृते कुटुम्बिनि तद्धनगतिमाह पुत्राभावे य इति । पुत्राभाव इतिवचनात्सत्सु पुत्रेषु त एव गृह्णीयु । अविशेषात्समम् । तत्र नारदीये विशेष । "यत्किञ्चिष्ट प्रीतिदायेभ्यो दत्वर्ण पैतृक च यत् भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिते' ति । कात्यायनस्तु "भ्राता पितृव्यमातृभ्या कुटुम्बार्थमण कृत विभागकाले देय तद्रिक्थिभि सर्वमेव त्वि' ति । अत्र याज्ञवल्क्य [ २, १२३ ] "पितुरूर्ध्वं विभजता माताप्यदा सम हरे' दिति । अत्र चोक्त "पुत्रैरेव सह वृत्ति स्या दिति । तथा च मनु [ ९,३ ] ' पिता रक्षति कौमारे भर्ता रक्षति यौवने पुत्रस्तु स्थविरे भाव न स्त्री स्वातन्त्र्यमर्हती ति । एव मातुरप्यभावे तद्धन भर्तृकुलल ध स्वय

---

[1] तदत्र नारदोक्तम् । C U[1] तत्र मूल G U[8]

मर्जितं च पुत्रा अप्रत्ताश्च दुहितरः समं गृह्णीयुः "स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी अप्रत्ता चेत्समूढा तु लभते मानमात्रक"मिति बृहस्पतिः । पितृकुललब्धं चाप्रत्ता एव दुहितरः । "मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव स" इति मनुः [९, १३१] । अथ प्रत्ता दुहितरः पुत्राश्च "जनन्यां संस्थितायां तु समं सर्वे सहोदराः भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः" इति मानवमेव [ ९, १९२ ] । अत्र व्यासः "असंस्कृतास्तु ये तत्र पैतृकादेव ते धनात् संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधी"ति । अत्र क्रमविवाहे बृहस्पतिः "ब्रह्मक्षत्त्रियविट्शूद्रा विप्रोत्पन्नास्त्वनुक्रमात् चतुस्त्रिद्व्येकभागेन भजेयुस्ते यथाक्रमम्" । मानवे च स्पष्टमुक्तं [ ९, १५३ ] "सर्वं वा रिक्थजातं तद्दशधा प्रविभज्य तु सम्यग्विभागं कुर्वीत विधिनानेन धर्मवित् चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्त्रियासुतः वैश्यापुत्रो हरेद् द्व्यंशमंशं शूद्रासुतो हरे"दिति । यस्य तु ब्राह्मणी वन्ध्या मृता वा तस्य क्षत्त्रियादिसुतास्त्रिद्व्येकभागाः । यस्य त्वेकस्यामप्येकः पुत्रः स सर्वमेव हरेत् शूद्रापुत्रवर्जं यथाह देवलः "आनुलोम्यैकपुत्रस्तु पितुः सर्वस्वभाग्भवेत् निषाद एकपुत्रस्तु विप्रस्वस्य तृतीयभाक् द्वौ सकुल्यः सपिण्डो वा स्वधादाता स्वयं हरे"दिति । निषादः पारशवः । क्षेत्रविषये बृहस्पतिः "न प्रतिग्रहभूर्देया क्षत्त्रियादिसुताय वै यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् शूद्रो द्विजातिभिर्जातो न भूमेर्भागमर्हति सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ।" याज्ञवल्क्यः [२, १३३-१३४] "जातो हि दास्या शूद्रेण कामतोंऽशहरो भवेत् मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिन"मिति । भार्याविषये विष्णुः [१८, ३४] "मातरः पुत्रभागानुसारिभागहारिण्य" इति । अत्र "औरसपुत्रिकाबीजक्षेत्रजाः पुत्रिकासुतः पौनर्भवश्च कानीनः सहोढो गूढसंभवः दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धः यत्र क्वचोत्पादितश्च पुत्राख्या दश पञ्च च । अनेनैव क्रमेणैषां पूर्वाभावे परः परः पिण्डदोंऽशहरश्चेति प्रायेण स्मृतिषु स्थितिः । तत्रौरसो धर्मपत्नीजः "सवर्णापूर्वशास्त्रविहिताया"मिति पूर्वमुक्तः । गौतमः [२८,१८] "पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवाद्ये"ति । बृहस्पतिः "एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वितरे स्मृताः" । अत्र मनुः [९,१३४] "पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः" इति । याज्ञवल्क्यः [२,१२८] "अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मत" इति । अयमेवोत्पादयितुर्बीजजः क्षेत्रजस्तु क्षेत्रिणः । बृहस्पतिः "पुत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ । रिक्थे पिण्डाम्बुदाने च समौ संपरिकीर्तिता"विति । काश्यपः "सप्त पौन-

भेवाः कन्या वर्जनीयाः कुलाधमाः वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला उदक स्पर्शिता या च या च पाणिगृहीतिका अग्निं परिगता या च पुनर्भूप्रसवा च ये"ति । कात्यायनः "क्लीब विहाय पतित या पुनर्लभते पतिं तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य स" इति । मनुः [९,१३२] "पितृवेश्मनि या कन्या य पुत्र जनयेद्रहः त कानीन वदेन्नाम्ना वोढुः कन्यासमुद्भव" इति । नारदः [१३, १७] "कानीनश्च सहोढश्च गूढाया यश्च जायते तेषा वोढा पिता ज्ञेयस्ते च भागहराः पितु"रिति । वसिष्ठ [१७,२३] "अप्रत्ता दुहिता यस्य पुत्र विन्देत तुल्यत· पौत्री मातामहस्तेन दद्यात्पिण्ड हरेद्धन"मिति । अनूढायामेव मृतायां मातामहस्य पौत्रः । अन्यथा वोढु· पुत्र. । मनु· [९,१७३] "या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती वोढु· स गर्भो भवति सहोढ इति चोच्यते उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः स गृहे गूढमुत्पन्नस्तस्य स्याद्यस्य तल्पज. । दत्तः पूर्वमेवोक्तः । पैठीनसि· "अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्रा परपरिग्रहेण आर्षेयेण जातास्तसहृतकुलीना द्व्यामुष्यायणा भवन्ती"ति । मनु. [९,१८२]। "भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत । इति दत्तस्वीकार· । भ्रातृपुत्रेषु सत्सु तेष्वेवैको ग्राह्य इत्युक्तम् । [मनु० ९,१७४, १७६,७७,१६९,१७१] "क्रीणीयाद्यस्तु पुत्रार्थं मातापित्रोर्यमन्तिकात् स क्रीतकः सुतस्तस्य सदृशोसदृशोपि या मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् आत्मान स्पर्शयेद्यस्म स्वयदत्तस्तु स स्मृतः सदृश तु प्रकुर्वीत गुणदोषविवर्जित पुत्र पुत्रगुणैर्युक्त स विज्ञेयस्तु कृत्रिम· । मातापितृभ्यामुत्सृष्ट तयोरन्यतरेण वा य पुत्र प्रतिगृह्णीयादपविद्धः स उच्यत"इति ॥ सर्वे एते सजातीयाः " सजातीयेष्वय प्रोक्तस्तनयेषु मया विधि"रितियाज्ञवल्क्यवचनात् [ २, १३३ ]। विष्णु [ १५ २७ ] "यत्र वचनोत्पादितश्च द्वादश " इति । याज्ञवल्क्यः [२, १३२] " पिण्डदोंशहरश्चैषा पूर्वाभावे पर· पर" इति । मनुः [ ९, १८४ ] "श्रेयसः श्रेयसोभावे पापीयान्रिक्थमर्हती"ति । नारद· [ १३, ४९ ] " क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ज्यायसो ज्यायसोभावे जघन्यस्तदवाप्नुया " दिति । देवलः "सर्वे ह्यनौरसस्यैते पुत्रा दायहरा स्मृता. औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्य न तिष्ठति तेषा सवर्णा ये पुत्रास्ते तृतीयांशभागिनः शेषास्तमुपजीवेयुर्ग्रासाच्छादनसंभृता ' इति । मनु· [ ९, १६४ ] "षष्ठ तु क्षेत्रजस्यांश प्रदद्यात्पैतृकाद्धनात् औरसो विभजन्दाय पित्र्य पञ्चममेव वे"ति । बृहस्पतिः "क्षेत्रजाद्याः सुतास्त्वन्ये पञ्चषट्सप्तभागिन" इति । हारीत· "विभजिष्यमाण एकविंश कानीनाय दद्याद्विंश पौनर्भवायैकोनविंश द्व्यामुष्यायणायाष्टादश क्षेत्रजाय

सप्तदश पुत्रिकापुत्रायेतरानौरसाये"ति। वसिष्ठः "पुत्रं प्रतिग्रहीष्य"न्निति प्रक्रम्य "तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभा"गिति [वा०ध०शा० १५,९]। एवमेतेषु शास्त्रेषु विद्यमानेषु पुत्रेषु यदाचार्येण पूर्वमुक्तं "तेषां कर्मभिः संबन्धो दायेनाव्यतिक्रम"श्चेति [१३,१–२] तदुर्मपत्नीजे पुत्रे सति क्षेत्रजादीनां समांशहरत्व-प्रतिषेधपरं वेदितव्यम्। अथाविभाज्यम्। अत्र मनुः [९, २०८] "अनुपघ्न-न्पितृद्रव्यं श्रमेण यदुपार्जितं स्वयमीहितलब्धं तन्नाकामो दातुमर्हती"ति। कात्यायनः "नाविद्यानां तु वैद्येन देयं विद्याधनात्क्वचित् समविद्याधिकानां तु देयं वैद्येन तद्धन परभक्तप्रदानेन प्राप्तविद्यो यदान्यतः तया प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यत" इति। व्यास. "पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथे"ति। याज्ञवल्क्यः [२, ११९] "क्रमादभ्या-गतं द्रव्यं हृतमभ्युद्धरेत यः दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च"। [मनुः ९,२००]। "पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् न तं भजेरन्दायादा भजमानाः पतन्ति ते"। व्यासः "साधारणं समाश्रित्य यत्किंचिद्वाहनायुधं शौर्यादिना-प्नोति धनं भ्रातरस्तत्र भागिनः तस्य भागद्वयं देयं शेषास्तु समभागिन" इति। इति पुत्र-दायविभागः। तदभावे तु "मृतस्य यः प्रत्यासन्नः सपिण्डः स दायं हरेते"ति वक्ष्यमाणेन संबन्धः। "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपौरुष"मिति सपिण्डलक्षणम्। तेषु यो यः प्रत्यासन्नः स गृह्णीया-दिति। भार्या तु रिक्थग्राहिणः सपिण्डा रक्षेयुरित्याचार्यपक्षः। श्रूयते हि [तैत्ति० सं०६,५,८,२,] "तस्मात्स्त्रियो निरिन्द्रिया अदायादी"रिति। मनुरपि "निरिन्द्रिया अदायादाः स्त्रियो नित्यमिति स्थिति"रिति[1]। अत्र सपिण्डाद्यभावे बृहस्पतिः "अन्यत्र ब्राह्मणात्किंतु राजा धर्मपरायणः तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनं वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः एतावदेव साध्वीनां चोदितं विधवाशनं वसनस्याशनस्यैव तथैव रजकस्य च धनं व्यपोह्य यच्छिष्टं दायादानां प्रकल्पयेत। धूमावसानिकं श्राद्धं संध्यायां स्नानतः पुरा[2]। वसनाशनवासांसि विगणय्य धवे मृत" इति। व्यासः "द्विसाहस्रः परो दायः स्त्रियै देयो धनस्य तु यच्च भर्त्रा धनं दत्तं यथाकाममवाप्नुयात्. पणानां द्वे सहस्रे तु यस्य परिमाणं स द्विसाहस्रः। एष एव परो दायः स्त्रियो नाधिक इति। एतत्प्रभृते धने ज्ञातयश्च न रक्षेयुरिति-शङ्कायाम्। "पत्नी दुहितरश्चैवे"त्यादि [या०ध०शा० २,१३५] यानि पत्न्या

[1] Compare Manu ix, 18.

[2] श्राद्धं समायां स्नानतः पुरा G, U[1], श्राध्य समाप्यां स्नानत. पुरा G. U.[2]

दायप्राप्तिपराणि तान्यप्येवमेव द्रष्टव्यानि। गोतमस्तु पुत्राभावे पत्न्याः सपिण्डादिभिः समांशग्रहणमाह [ २८, २१ ]। "पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री चानपत्यस्ये"ति। अस्यार्थः। "अनपत्यस्य रिक्थं पिण्डसंबन्धाः सपिण्डाः प्रत्यासन्नक्रमेण भजेरन। तदभावे गोत्रसंबन्धाः सगोत्राः। तदभाव ऋषिसंबन्धाः समानप्रवराः स्त्री च पत्नी च। अत्र स्त्रिया सह सपिण्डा भजेरंस्तदा तैरेकमंशं गृह्णीयात्। ततश्च "पितुरूर्ध्वं विभजतां माताप्यंशं समं हरे"दिति [या०ध०शा० २,१२३]। सपिण्डादिभिः सह ग्रहणमुक्त"मिति। वयमप्येतमेव पक्षं रोचयामहे[1]। अत्र पितरि भ्रातरि च सोदर्ये जीवति सोदर्यो भ्राता गृह्णीयादित्येके। तथा च शङ्खः। "अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे मातापितरौ लभेयातां पत्नी वा ज्येष्ठे"ति॥ देवलः। "ततो दायमपुत्रस्य विभजेरन् सहोदराः कुल्या दुहितरो वापि ध्रियमाणः पितापि च सवर्णा भ्रातरो माता भार्या चेति यथाक्रम"मिति। याज्ञवल्क्यः [२, १३, ८-९] "संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् असंसृष्टयपि चादद्यात् संसृष्टी नान्यमातृजः"। अत्र सोदर्य इतिविशेषवचनात् "पत्नी दुहितर"श्चेत्यत्र भ्रातृग्रहणं भिन्नोदरविषयमपि प्रत्यासत्त्यतिशयान् पितैवेत्याचार्यस्य पक्षः। तदभावे भ्राता सोदर्यः। तदभावे तत्पुत्राः। तदभावे भिन्नोदराः। तदभावे पितृव्य इत्यादि द्रष्टव्यम्। मात्रादयोपि स्त्रियो जीवनमात्रं लभेरन्निति॥

३. तदभावे सपिण्डाभाव आचार्यो दायं हरेत् तस्याप्यभावेन्तेवासी हरेत्। हृत्वा तदर्थं धर्मकृत्येषु तटाकखननादिपूपयोजयेत्। वाशब्दात् स्वयं वोपयुञ्जीत॥

४. दुहिता वा दायं हरेत् पुत्राभाव इत्येके। अनन्तरोक्तविषय इत्यन्ये॥

५. सर्वग्रहणाद् बन्धूनां सगोत्राणां चाप्यभावे॥

६. एक एवं मन्यन्ते ज्येष्ठ एव दायहर इतरे तमुपजीवेयुः सोपि तान् पितेव परिपालयेत्। तथा च गोतमः [२८,३] "सर्वं वा पूर्वजस्येतरान् बिभृयात् पितृव"दिति॥

७. क्वचिद्देशे सुवर्णादि ज्येष्ठस्य भाग इत्याह भूमौ जातं भौमं धान्यं कृष्णं माषादि। कृष्णायसमित्यन्ये॥

८. रथः पितुरंशो गृहे च यत् परीभाण्डमुपकरणं पीठादि तदपि।

९. भार्यायास्तद्धृतोलंकारांशो ज्ञातिभ्यः पित्रादिभ्यश्च यल्लब्धं धनं तच्चेत्येके॥

१० ज्येष्ठो दायाद इति ( सूत्र० ६ ) यदुक्तं तच्छास्त्रैर्विप्रतिपिद्धं विरुद्धं येन विरुद्धं तद् दर्शयति।

---

[1] The passage तदापत्नी सह ते"—रोचामहे is found in G. U.[1] alone.

११. पुत्रेभ्य इतिबहुवचननिर्देशादविशेषेण श्रवणमत्र चोद्यम् ॥

१२. अथापि ननु चेत्यर्थे । ज्येष्ठ पुत्रं धनेन निरवसाययन्ति पृथक्कुर्वन्तीत्येकवच्छ्रूयते । यथैव एव ज्येष्ठो दायादस्तदनुरूपमपि श्रूयत इति परिहरति ॥

१३ अथापीति परिहारोपक्रमे । पशूना मध्येऽजाश्चावयश्च जातिभेदेपि सह चरन्ति । रेभा शोभा । इह तु तद्वत्युपचारः । स्नातकस्य मुखं कुण्डलादिना शोभते । इवशब्दो वाक्यालंकारे । श्रोत्रियस्य स्वीत्रामतमत्वमाचार्यकुले चिरकालं ब्रह्मचारिवासात्। यथैतानि वाक्यानि दृष्टार्थमात्रमनुवदन्ति न किंचिद् विदधति तथा तस्माज्ज्येष्ठ पुत्रमित्यादिकमपीति न्यायविद आहुः । न च केवलमयमेवानुवादः । किं तर्हि "मनुः पुत्रेभ्य" इत्ययमप्यनुवाद एव ॥

१४. हिशब्दो हेतौ । यस्मादेतावनुवादौ न कस्यचिद् विधायकौ तस्माद् ये धर्मयुक्ताः पुत्राः सर्व एव ते भागिनः ॥

१५. यस्तु ज्येष्ठोप्यधर्मेण द्रव्याणि प्रतिपादयति विनियुङ्क्ते तमभागं कुर्वीत जीवद्विभागेपि तस्मै भागं न दद्यात्। ऊर्ध्वं विभागेपि भ्रातरः । अपिशब्दात् किमुतान्यमिति ज्येष्ठस्य प्राधान्यं ख्याप्यते ॥

१६-१७ जीवन् पुत्रेभ्य इत्यनेन भार्याया भागो न दर्शितः[1] । तत्र कारणमाह जायापत्योरिति स्पष्टम् । तस्मात् पाणीत्यादि । कर्मार्थं द्रव्यं जायायाश्च न पृथक् कर्मस्वधिकारः । किंतु सहभावेन "पत्नया धर्मश्च कर्तव्यः सोनया सह" विवचनात् । तत्र किं पृथग्द्रव्येणेति ॥

१८-१९. पुण्यफलेषु स्वर्गादिष्वपि तथा सहत्वमेव ।[2] "दिवि ज्योतिरजरमारभेता"-मित्यादिभ्यो मन्त्रलिङ्गेभ्यः । द्रव्यपरिग्रहेषु द्रव्यार्जनेष्वपि तथा सहत्वमेव । तत्र पतिरर्जयति जाया गृहे निर्वहतीति योगक्षेमावुभयायत्ताविति द्रव्यपरिग्रहेपि सहत्वम् । तदेवोपपादयति ॥

२०. हि यस्माद् भर्तुः प्रवासे सति नैमित्तिके दाने छिन्दत्यपि दद्यादित्यादिके दाने कृते भार्याया न स्तेयमुपदिशन्ति धर्मज्ञाः । यदि भर्तुरेव द्रव्यं स्यात्तेव स्तेयम् । नैमित्तिक इतिवचनाद् विषयान्तरे स्तेयं भवत्येव । एतदेव द्रव्यसाधारण्येपि दंपत्योर्वैषम्यं यत् पतिर्यथेष्टं विनियुङ्क्ते जाया त्वेवावत्येवेति । न च पत्युः स्वयमर्जितस्य विनियोगे जायाया अनुमत्यपेक्षा स्वतन्त्रत्वात् । स्वतन्त्रो धर्मे यथा राजा राष्ट्रे । अत एव भार्यायाः स्तेयशङ्का न भर्तुः ॥

---

[1] इत्यनेन दशतो सहभावो दर्शित. । G, U.[1]—

[2] G U.[1] adds स्वर्गादिष्वपि सहत्वमेव दिवि ज्योतिरजरमारभेतयादि द्रव्यपरिग्रहेषु विनियुङ्क्ते ।

## PAṬALA VI., KAṆḌIKĀ 15.

१. ज्येष्ठो दायाद इत्यादिकं शास्त्रविप्रतिषेधादप्रमाणमित्युक्तम् । एतेन देशधर्माः कुलधर्माश्च व्याख्याताः । शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयादयोऽप्रमाणं विपरीताः प्रमाणमिति ॥

२. मातुर्योनिसंबन्धा मातुलादयः पितुश्चा सप्तमात् पुरुषात् संबन्धाः सपिण्डाः ।........॥

४. ये च तान् बालान् मृतान् हरन्ति निर्हरन्ति तेष्युदकोपस्पर्शनं कुर्युरिति । एवमाचार्यस्य पक्षः ॥

५. भार्या पत्नी परमगुरव आचार्यमातापितरः संस्था मरणम् । भार्यायं संस्थितायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनम् । किं तर्हि । अपरेद्युरा तस्मात्कालादभोजनम् ॥

७.–९. प्रकीर्य केशान् पांसूनावपन्ति । एकवाससः । दक्षिणामुखा दक्षिणां दिशं निरीक्षमाणाः । सकृदुन्मज्ज्योदकादुत्तीर्य तीरे उपविशन्ति दक्षिणामुखा एव । एवं त्रिरेवमुक्तेन प्रकारेण त्रिरुपमज्ज्योपविशेयुः । ततस्तत्प्रत्ययं तेषां मृतानां भार्यादीनां यथा प्रत्ययो भवति मह्यमुदकं दत्तमिति तथोदकमुत्सिञ्चन्ति त्रिरित्यनुवृत्तेः । आचारात् पित्र्यत्वाचोभाभ्यां हस्ताभ्यां तिलमिश्रम् । एकोत्तरवृद्धिः । भरद्वाजगोत्राय यज्ञशर्मण एतत् तिलोदकं ददामीतिप्रयोगः । उत्सिच्याप्रतीक्षाः पृष्ठतोनिरीक्षमाणा ग्राममेत्य गृहं प्रविश्य । अनेन बहिरिदं कर्मेति गम्यते । यत् स्त्रियः कर्तव्यमाहुरग्न्याज्यस्पर्शनगवालम्भनादीनि । एतत् प्रथमेहनि द्वितीयादिष्वहरहरञ्जलिनैकोत्तरवृद्धिरैकादशाहादिति पितृमेध उक्तं द्रष्टव्यम् ॥

११. एकान्तेपि विधिप्रतिषेधानुसारिणः शुचयस्तान् मन्त्रवतोधीतवेदान् सर्वकृत्येषु श्रौतेषु गार्ह्येषु स्मार्तेषु सर्वकर्मसु सर्वेषु पित्र्येषु च भोजयेत् ।........॥

१२. सप्तम्यर्थे तसिल् देशः प्रयागादिः कालः सूर्यग्रहणादिः शौचं कृच्छ्रादिपरिसमाप्तिः । सम्यक् समीचीनः मतिग्रहीता "तुल्यगुणेषु वयोवृद्धः श्रेयान्"-नित्यादिः । ........ ॥

१३. .......यस्माद्वोद्धृत्यान्नं न दीयते न तद् भोक्तव्यम् ॥

१४. यद्यद् भक्ष्यमाणं पश्यतो लालोत्पद्यते तत् क्षारम् । ........ ॥

१५. अवरान्नं कुलित्थादि तत्संसृष्टान्नस्य होमो न विद्यते ॥

१६. अथ यस्यैवंविधमेव भोज्यमुपस्थितं तस्य कथं होमस्तत्राह । अद्धविष्यस्येति । औपासनात् पचनाद्वाग्नेरुदीचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयात् ।

वैश्वदेवमन्त्रैरेपोहविष्यस्य होमः । तदेवं क्रियमाणं हुतं च भवति । अहवनार्थनिवृत्तेः[1] । अहुत चाग्नौ भवति भस्ममात्रत्वात् ।.... . अपर आह । चान्यहविष्याणि व्यञ्जनान्यहरहर्भोज्यानि तेषामेव संस्कारो न सक्तुच होममन्त्रक इति ॥

२३. उपनयनादर्वाङ् नाप्रयता इत्यपर दर्शनम् ॥

२४. उपनयनमपि परामृशतस्त्वच्छन्दस्य निष्ठाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता सा निष्ठा तदुपनयनमवसानमनधिकारस्येति ॥

२५. अस्मिन्नर्थे स्मृतिरपि भवति "प्रागुपनयनात् कामचारवादभक्षो हुताद् ब्रह्मचारी"... ....इति गोतमः ( २, १–३ ) ॥

---

## PATALA VII, KANDIKĀ 16.

१. मासिश्राद्धविधित्सया तस्य प्ररोचनार्थोयमर्थवादः प्रस्तूयते । ........॥

२. तादर्थ्ये एषा चतुर्थी प्रजानां नि श्रेयसार्थम् । निःश्रेयसा चेतिपाठे छान्दसो यकारस्य चकारः । अपर आह । छान्दसो लिङ्गव्यत्ययः । प्रजानिःश्रेयसं चास्य कर्मणः फलमिति ॥

३. तत्र श्राद्धकर्मणि पितरः पितृपितामहप्रपितामहा देवताः ब्राह्मणास्तु भुञ्जाना आहवनीयस्थत्वे वेदितव्याः । त्रीणि श्राद्धे करणानि होमो ब्राह्मणभोजनं पिण्डदानं चेति । तत्र भोजनस्य प्रधानतरत्वख्यापनार्थोयमर्थवादः ॥

४. तदिदं कर्म मासे मासे कर्तव्यम् । वीप्सावचनाद् यावज्जीविकोभ्यासः ॥

५. अपरपक्षस्य यान्यहानि तेष्वपराह्नः प्रशस्ततरः ॥

८. .... तस्यापत्ये प्रजासंताने स्त्रीप्रायं प्रायेण स्त्रियो भवन्ति ।

९. पुत्रा जायन्ते । अचोराः पुत्रा भवन्ति ॥

१०. वृत्ताध्ययनसंपत्तिर्ब्रह्मवर्चसम् ॥

१२. पुमांस एव भवन्ति बहवश्च भवन्ति । न चानपत्यः प्रमीयते । जीवत्स्वेव पुत्रेषु संनिहितेषु च स्वयं म्रियते न तेषु मृतेषु न देशान्तरं गतेषु नापि स्वयं देशान्तरं गत इति ॥

१४. कर्षः कृषिः । राद्धि सिद्धिः ॥

१७. व्यवहारो वाणिज्यं शास्त्रपरिमाणं वा ॥

---

[1] अर्थनिवृत्ते. G. U[1], मावार्थे निमित्ते G. U[2]

२०. त्रयोदशे बहवः पुत्रा मित्राणि च भवन्ति। अपत्यानि दर्शनीयानि भवन्ति किंतु ते पुत्रा युवमारिणो युवान एव म्रियन्ते ॥

२५. धर्मार्जितं यद् द्रव्यं तीर्थे पात्रे च प्रतिपन्नं तेनापि तथा तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालमिति ॥

२६. उत्तरत्र मांसग्रहणादिहापि मांसस्यैव ग्रहणम्। ....... ॥

२८. एतेन माहिषेण मांसेनान्येषामपि ग्राम्याणामजादीनामारण्यानां शशादीनां मांसं मेध्यं व्याख्यातं पितॄणां प्रीतिकरमिति। मेध्यग्रहणं प्रतिषिद्धानां मा भूदिति ॥

---

## PAṬALA VII, KANDIKĀ 17.

१. खड्गचर्मोपस्तरणेष्वासनेषूपविष्टेभ्यो ब्राह्मणेभ्यो दत्तेन खड्गमांसेनानन्त्यं कालं पितॄणां प्रीतिर्भवति। आनन्त्यमितिपाठे स्वार्थे ष्यञ् ॥

४. ......सृष्ट उत्साहवान्। सृष्टश्चेद् ब्राह्मणवधेहत्वापीति [ गो० ध० शा० २२, ११ ] दर्शनात्। वृत्तिसर्गता न येषु क्रम इत्यत्र सर्ग उत्साहः। ........ कीदृशान्। ब्रह्मविद आत्मविदः। योन्यादिभिरसंबन्धान् ...... मन्त्रसंबन्धा ऋत्विजो याज्याश्च। अन्तेवासिसंबन्धाः शिष्याचार्याश्च ॥

६. एतेन सोदर्येणान्तेवासिनो बहुवचननिर्देशात् पूर्वत्र निर्दिष्टा योन्यादिसंबन्धाः सर्व एव व्याख्याताः। अन्येषामलाभे समुदेता भोजयितव्या इति .... ॥

८. परस्परं भुञ्जतेस्यामिति संभोजनी। अधिकरणे ल्युट्। ....... ॥

९. एतद् व्याचष्ट इहैवेत्यादि। संभुञ्जती परस्परभोजनस्य निमित्तभूता दक्षिणा श्राद्धदानक्रिया गृहाद् गृहं गत्वैहैवेह लोके नश्यतीत्यर्थः ॥

१०. ....., यो वयोवृद्धः स तावद् ग्राह्यः। तत्रापि यो द्रव्येण कृश ईप्सञ्जीप्समानश्च भवति स ग्राह्यः। यद्वा वयोवृद्धो द्रव्यकृशोपि। द्रव्यकृशोप्यवृद्धोपीति द्वयोस्तु समवाये यथा रुचिरिति ॥

११. श्राद्धदिनात् पूर्वेद्युरेव ब्राह्मणेभ्यो निवेदितव्यं श्वः श्राद्धं भविता तत्राहवनीयार्थे भवद्भिः प्रसादः कर्तव्य इति ॥

१२. ....... अद्य श्राद्धमिति ॥

१३. तृतीयमामन्त्रणमाह्वानं भोजनकाले सिद्धमागम्यतामिति तत्र तृतीयं भवति ॥

१४. न केवलमेव निवेदनमेव त्रिर्भवति । किं तर्हि । यच्च यावच्च श्राद्धे क्रियते तत् सर्वत्र त्रिरावर्त्यमित्येके मन्यन्ते । अत्र पक्षे होमभोजनपिण्डानामभ्यावृत्तिस्तस्मिन्नेवापराह्णे ॥

१६. सर्वेषु श्राद्धेषु त्रिष्वपि वृत्तेषु समाप्तेषु सर्वतस्त्रयाणां श्राद्धानां य ओदनशेषस्ततः समवदाय शेषस्य ग्रासवरार्ध्यं प्राश्नीयात् । यथोक्तं गृह्ये [ ८, ९ ] "उत्तरेण यजुषा शेषस्य ग्रासवरार्ध्यं प्राश्नीया"दिति । तत्र प्रयोगः पूर्वेद्युर्यथा निवेदनं तद्वदपरेद्युःप्रातर्भोजनकाल आमन्त्रणं ततो होमादिपिण्डदानान्तमेकैकमपवर्ग्य ततः सर्वतः समवदाय "प्राणे निविष्टोमृत"मितिमन्त्रेण [तैत्ति० आर० १०,३४,१] प्राशनमिति ॥

१७. प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

इति वैयाकरणाः । तस्याः शरवत्या उदक्तीरवासिन उदीच्यास्तेषां वृत्तिराचार आसनेषूपविष्टानां ब्राह्मणानां हस्तेषूदपात्रानयनम् । उदपात्रादर्घ्यपात्रादप आदायार्घ्यदानमिति । "पितरिदं तेर्घ्यं पितामहेदं तेर्घ्यं प्रपितामहेदं तेर्घ्य"मितिमन्त्रा आश्वलायनके [ गृ० सू० ४, ७, १० ] । यद्यप्युदीच्यवृत्तिरित्युक्तं तथापि प्रकरणपाठसामर्थ्यात् सर्वेषामेव भवति ॥

१९. अथ ब्राह्मणाः काममिलादीत्यविसृजेयुरनुजानीयुः । तैश्चातिसृष्ट उद्धरेज् जुहुयाच्च । उद्धरणं नाम ब्राह्मणार्थे पक्वादन्नादन्यस्मिन् पात्रे पृथक्करणम् ॥

२०. श्वभिरितिबहुवचनाद् ग्रामसूकरादीनां तादृशानां [1]ग्रहणम् । अपपात्राः पतितादयः प्रतिलोमादयश्च ........ ॥

२१. श्वित्रः श्वेतकुष्ठी शिपिविष्टः खलतिः । विवृतशेफ[2] इत्यन्ये । परतल्पगामी यः परतल्पं गत्वाकृतप्रायश्चित्तस्तस्य ग्रहणम् । आयुधीयपुत्रः क्षत्रियवृत्तिमाश्रितो य आयुधेन जीवति ब्राह्मणस्तस्य पुत्रः । शूद्राद् ब्राह्मण्यामुत्पन्नश्चाण्डालः । न तस्य प्रसङ्गः । ब्राह्मणान् मन्त्रविद इत्युक्तत्वात् । तस्मादेवं व्याख्येयम् । क्रमविवाहे शूद्रायामुत्पाद्य पश्चाद् ब्राह्मण्यामुत्पादयति तस्य पुत्रः शूद्रोत्पन्नो ब्राह्मण्यामिति । स हि पिता शूद्रः संपन्नः । श्रूयते हि "तज्जाया जाया भवति यदस्यां जायते पुन"रिति ...... ॥

२२. "मधु वाता ऋतायत" इतिऋचस्त्रिमधुः । तत्र हि प्रत्यृचं त्रयो मधुशब्दाः । इह तु तदध्यायी पुरुषस्त्रिमधुः । त्रिसुपर्णः "ब्रह्मेतु मा्" ... "चतुष्कपर्दा युवतिः सुपेशा" इत्यादिक-

[1] Omitted in G. U.[1,1].—[2] मडगूह G. U.[1].—

स्त्यृचः । अन्ये तु तैत्तिरीयके [ आर० १०, ४८–५० ] "ब्रह्ममेतु मा"मित्यादय-स्त्रयोनुवाका इत्याहुः । तत्र हि "य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्या"दिति श्रूयते । पूर्ववत् पुरुषे वृत्तिः । नाचिकेतोग्निर्बह्वीषु शाखास्वभिधीयते तैत्तिरीयके कठवल्लिषु शतपथ इति च तं यो वेद मन्त्रब्राह्मणेन सह स त्रिणाचिकेतः । नाचिकेता-नुवाकांस्त्रीनित्येके । विराजोनुवाकाध्यायीत्यन्ये । प्राणापानेत्यादि । अश्वमेधः पुरुषमेधः सर्वमेधः पितृमेध इति चत्वारो मेधास्तदध्यायी चतुर्मेधः । चतुर्णां यज्ञानामाहर्ते-त्यन्ये ।......ज्येष्ठसाम तलवकाराणां प्रसिद्धम् । "उदु त्यं" "चित्र"मित्येतयोर्गीतं तद् गायतीति ज्येष्ठसामगः । ज्येष्ठसामिक इतिपाठे व्रीह्यादित्वात् ठन् ... । अनूचानपुत्रस्त्रैविद्यपुत्रः श्रोत्रियपुत्र इत्यपि पठन्ति[1]। तदादरार्थं द्रष्टव्यम् ।....... वेदाध्यायीत्यस्याप्यन्त इति शब्दं पठन्ति सोपपाठः । एतेन पश्चामी अविभक्तिक-पाठो व्याख्यातः ॥

२३. श्राद्धकर्मण्यारब्धे कारणाद् विलम्बे मध्ये यद्यादित्योस्तमियात् तदा श्राद्ध-शेषं नक्तं न कुर्वीतापरेद्युर्दिवैव कुर्वीतेति ॥

२४. पूर्वेद्युर्निवेदनप्रभृत्या पिण्डनिधानान्मध्ये कर्तुर्भोजनप्रतिषेधः ॥

२५. अनन्तरमन्यत्र राहुदर्शनादिति पठन्ति । न च नक्तमित्यस्यापवादः । राहुदर्शने नक्तमपि कुर्वीतेति । उदीच्यास्त्वेतत् प्रायेण न पठन्ति तथा च पूर्वैर्न व्याख्यातम् । प्रत्युत न च नक्तमित्येतत् सोमग्रहणविषयमिति व्याख्यातम् । पठ्यमानं तु न च नक्तमित्यस्यानन्तरं पठितुं युक्तम् ॥

---

## PAṬALA VI. KAṆḌIKĀ 18.

१. विलयनं नवनीतम् । अल्पं यस्य दध्नो हस्तादिना मथनमात्रं न जलेन मिश्रणं तन् मथितम् ।......मांसमप्रतिषिद्धमपि । ....॥

२. कृष्णधान्यं कृष्णमाषादि कृष्णकुलित्थादि न कृष्णव्रीह्यादयः । ......॥

३. अहविष्यं कोद्रवादि ....... ॥

४. .......अच्छायोपग इतिच्छायामनुपगच्छन् । स्थानासनिकः स्थानासन-वान् दिवा स्थानं रात्रावासनं न कदाचिच्छयनम् । एतद्विलयनाद्यारभ्यानन्तरोक्तं व्रतं संवत्सरं चरेत् । एतद् व्रतमष्टाचत्वारिंशद्वर्षसाध्येन ब्रह्मचारिव्रतेन संमितं सदृशं यावत् तस्य फलं तावदस्यापीत्याचक्षते धर्मज्ञाः । न केवलं स्मृत्यादिकमेव

---

[1] वेदाध्यायीत्यस्यानन्तरमिति शब्दं पठन्ति । G.U. [1,2].—

प्रयोजनमिति । अपर आह । विदथनं मथितमित्यादिकं मन्त्रान्तरं स्मृत्यादिकमन्यत् । अधीतानीत्यादिकं तु नैमित्तं व्रतमिति च । तच्च ब्रह्मचारिणो गृहस्थस्य च भवति तथा च बोधायनः "अष्टाचत्वारिंशत्संमितमित्यादयस्तेन तस्य संक्षेपः संवत्सरः तत् संवत्सरव्रतमनुष्ठायाध्यात्यानः । स यदि ब्रह्मचारी स्यादाग्निरनेन प्रविशेत । अथ यद्यब्रह्मचारी स्यात् केशश्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वे"त्यादि ॥

६. ......अन्नं संस्कुर्वन्ति । शुचय इतिवचनमाभिन्द्यार्थं नार्याः प्रयता इति पूर्वेणैव [ २, ३. १ ] प्राप्तस्य विहितत्वात् ॥

१३. तेषां संवत्सरस्याहारमुपलभतः मासानिति लोहितेन लोहितवर्णेनाजेन श्राद्धं कार्यम् । दृश्यते चास्मिन्नर्थे लोहशब्दः । "लोहस्तूपरो भवत्यथ तूपरः कृष्णसारङ्गो लोहितसारङ्गो वे"ति । यजुष्षु [ वाज० संहि० १८, १३ ] च भवति "श्यामं च मे लोहं च मे" इति ॥

१४. मानं धिष्ण्यं वेदिका दृश्यते हि मिनोतेरस्मिन्नर्थे प्रयोगः । अग्नेः मानीध्रं चतुरस्रं विमिन्वन्ति पुरस्तादुन्नतं पश्चान्निम्नमिति । तस्यैव चाप्यनुपन्नगरहितस्य प्रयोगः । तन्मानं कारयेत् कर्मकरैः प्रतिच्छन्नं च तद् भवति तिरस्कारिण्यादिना । इदमपि मानाद् बहिरेव ॥

१७. अत ऊर्ध्वं मासिश्राद्धं क्रियतां वा माकारि । अकरणेऽपि न प्रत्यवाय इति ॥

---

## PATALA VIII. KANDIKA 19.

१. ......गौराणां सर्षपाणां संबन्धीनि चूर्णानि कर्मकरैः कारयेत् । कारयित्वा तैश्चूर्णैः पाणिपादौ मुखं कर्णौ च प्रक्षालयेत् । प्रक्षाल्य चूर्णशेषं प्राश्नीयात् । प्राश्येति पाठे प्राश्येद्विक्लिन्नम् । एतत् तावत् प्रतिविध्यं विशेषकृत्यं परं तु प्रत्यहं कर्तव्यम् । यस्य च यदृतौ वातो नातिवात्यथो नावीत्य वाति तदासनस्थादृगासीनो भुञ्जीतेति वक्ष्यमाणेन संबन्धः तत्र यस्यत्यागिनमानतं स्यादिति प्रथमः कल्पः । प्राच्यतो दक्षिणां दिशमभिमुखो भुञ्जीत ॥

२. ......वस्तान मातृवता नैतद् व्रतं कार्यम् ॥

३. चमु भक्षणे । यत्र चम्यते स चमसो भोजनपात्रं स औदुम्बरस्ताम्रमयः सुवर्णेन मध्येऽलंकृतः प्रशास्तः प्रशस्तो भोजने ॥

४. न चान्येन कर्तुः पित्रापि तत्र पात्रे भोक्तव्यम् । अभिधा त्वर्थानुवादिनी । भोक्तव्य इतिपुंलिङ्गपाठेप्येष एवार्थः ॥

५. ......संनयन् पिण्डीकुर्वन् ॥

७. भोजनपात्रं सव्येन पाणिना न विमुञ्चेत् ॥

८. विमुञ्चेद् वा । किमर्थमिदम् । यावता प्रकारान्तरं न संभवति । सत्यम् । "प्रक्रमात् तु नियम्यत" इतिन्यायेन य एव प्रकारः प्रथमे भोजने स एवान्तादनुष्ठातव्य इति तदर्थमिदम् ॥

११. पाणिरत्र दक्षिणः ॥

१५. तेन "सर्पिष्मता ब्राह्मणं भोजयेदि"त्यादौ [ २, २०, ३ ] ब्राह्मणो भूत्वा न भुञ्जीत । अनुदेश्यानि च पितृभ्यो देवताभ्यश्च सकल्पितानि न भुञ्जीत ॥

१६. उत्तराच्छादनमुपरिवासस्तेन यज्ञोपवीतं कृत्वा भुञ्जीत । नास्य भोजने "अपि वा सूत्रमेवोपवीतार्थे" [ २, ४, २२ ] इत्ययं कल्पो भवतीत्येके । समुच्चय इत्यन्ये ॥

१९. ........इतिशब्दाचान्यदेवं युक्तम् ।

२०. मघासु च पूर्वपक्षेपि श्राद्धविधानेन सर्पिर्मिश्रमन्नं ब्राह्मणान् भोजयेत् ॥

---

## PATALA VIII., KANDIKĀ 20

१. येनोपायेनोपयोजयितुं शक्नुयादभ्यङ्ग उद्वर्तने भक्ष्ये भोज्ये चेति तेनोपायेन मासिश्राद्धे तिलानां द्रोणंद्रोणमुपयोजयेत् । तत्रैकैकस्य ब्राह्मणस्य द्रोणंद्रोणमुपयोजयितुमशक्यत्वात् समुदितानुपयोजयेत् । द्रोणंद्रोणमितिवीप्सावचनं प्रतिमासिश्राद्धमुपयोजनार्थमिति केचित् । अन्य एवंभूताः प्रयत्ना यत्नेनान्विष्य भोजयितव्या इति ॥

५. द्वितीये तिष्ये प्राप्ते द्वौ भोजयेदन्यत् समानमेवा तृतीयात् ॥

७. ........ब्राह्मणभोजनं चाभ्युदयेन भवति । चतुर्थप्रभृति चत्वारः पञ्चमप्रभृति पञ्चेत्यादि ॥

१०. आत्ततेजांसि तक्मत्राजिनादीनि नोपभुञ्जीत ॥

१६. पर्वसंधीना स्फोटनानि च वर्जयेदकारणात् । कारणं श्रमबाधादि । वादनस्फोटनानीतिसमासपाठ एष एवार्थः ॥

१८. एकस्वशब्दोनर्थकः । केचिन्नैव पठन्ति । धर्माविरुद्धा ये द्रव्यपरिग्रहास्तेषु चोक्तोत्पादयिता स्यात् ॥

१९. तीर्थं गुणवत् पात्रं यज्ञो वा । .. ....॥

२०. यन्ता नियन्ताप्रदाता । अतोर्थे यन्ता वा स्यात् यतः पुरुषादप्रदानेपि भयं न स्यात् । भयसंभवे तु पिशुनादिभ्यो देयम् ॥

२१. अर्थप्रदानप्रियवचनानुसारादिभिर्मनुष्याणां संग्रहणशीलः स्यात् ॥

---

## PATALA IX, KANDIKĀ 21

१. .... ..इतिशब्दः परिसमाप्त्यर्थः । एतावन्त एवाश्रमा इति चतुर्णामेवोपदेशेपि चत्वार इतिवचन "ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्ये"ति [ गौ० ध० शा० ३, ३६ ] स्मृत्यन्तरोक्तं मा ग्राहीति ॥

२. .......। क्षेममभयपदम् ।....... ॥

४. अनूत्सर्गदछान्दसो दीर्घः । विद्याया अनुत्सर्गोपि सर्वेषामाश्रमाणाम् । तस्मादाचार्यकुले वासः समानः ॥

५. प्रत्याश्रमं यानि कर्माणि विहितानि तानि बुद्ध्वा । ....... ॥

७. अथानन्तरं परिव्राजो धर्मा उच्यन्ते ।...... ॥

८. अत एव ब्रह्मचर्याश्रमादेव ब्रह्मचर्यवानविप्लुतब्रह्मचर्यः प्रव्रजति प्रव्रज्यां कुर्याद् यदि तत्रैव पक्वकषायो भवति श्रूयते च "ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वेति यदहरेव विरजेत् तदहरेव प्रव्रजे"दिति च । अत एवेतिवचनाद् गृहस्थाश्रमप्रविष्टस्य तत्परित्यागेनाश्रमान्तरप्राप्तिराचार्यस्यानभिमतेव लक्ष्यते । तत्रायमभिप्रायः । दारपरिग्रहे सति "यावज्जीवमग्निहोत्रं जुहुया"दितिश्रुत्या विरुध्यते स कथं परिव्रजेदिति । तस्मात् सत्यपि वैराग्ये काम्यकर्मपरित्यागेन नित्यानि नैमित्तिकानि च कुर्वन् प्रतिषिद्धानि च वर्जयन् गृहस्थ एव मुच्यत इति । तथाह याज्ञवल्क्यो "न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोतिथिप्रियः श्राद्धकृत् सत्यवादी च गृहस्थोपि विमुच्यत" इति । अथ योनाहिताग्निस्तस्य विरक्तस्य मुन्याश्रमप्रवेशे को विरोधः । ऋणश्रुतिविरोधः । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य" इति । मनुरपि [६, ३५] "ऋणानी"त्यादि । मोक्षो मोक्षाश्रमः । नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते । अथ तत्र "यदहरेव विरजेत् तदहरेव प्रव्रजे"दितिश्रुत्या युक्तं प्रव्रजितुं तदा विरक्तस्य गृहस्थस्यापि युक्तं भविष्यति स्मर्यते च "प्राजापत्या"मित्यादि [मनु० ६, ३८] तथा यो गृहस्थो वृद्धो मृतभार्यः पुनर्दार-

क्रियायामसमर्थस्तस्यापि युज्यते प्रव्रज्या। तस्माद् "यदहरेव विरजेत् तदहरेव प्रव्रजे"-दित्येष एक एवांशः प्रव्रज्यायाः। सर्वमन्यदविरक्तस्येति युक्तम्। एवकारस्तु सूत्रे श्रुत्यनुरोधेनोक्तो यथा "गृहाद् वा वनाद्" वेति ब्रुवाणेव श्रुति"र्ब्रह्मचर्यादेव प्रव्रजे"दित्याह तथेति ॥

१०. ...... ... शर्म सुखं वैषयिकं तदस्य नास्तीत्यशर्मा।............ इहार्थाः कृष्यादयः परलोकार्था जपहोमादयो यस्य न सन्ति सोनिहोनमुत्र इत्युक्तः। एवंभूतश्चरेत्। नैकस्मिन् ग्रामे द्व्यहमपि वसेत्। अत्र गोतमः [ ३, २१ ] न द्वितीयामपर्तु रात्रिं ग्रामे वसेत् ॥

११. यत् परैर्मुक्तं परित्यक्तमयोग्यतया ।.... ...॥

१२. सर्वैरेव वासोभिः परिमोक्षमेक उपदिशन्ति न किंचिदपि वासो बिभृयात्। नग्न एव चरेदिति। अपर आह सर्वतो विधितो निषेधतश्चास्य परिमोक्षमेके ब्रुवत इति न किंचिदस्य कृत्यं न किंचिदस्य वर्ज्यमिति ॥

१३. .......आत्मानमध्यात्मपटलोक्तमन्विच्छेदुपासीतेति ।.......॥

१४ आत्मनि बद्धेवगते सति तदेव ज्ञानं सर्वमशुभं प्रक्षाल्य क्षेमं प्रापयति। स्मर्यते च "यथैधांसी"त्यादि [ भगवद्गीता ४. ३७ ]। तदिदं निराकरोति ॥

१५. यान्येव यतेरवश्यं कर्तव्याकर्तव्यप्रतिपादनपराणि शास्त्राणि तैरेतद् विप्रतिषिद्धम्। तत्र मनुः [६, ८] "क्रुध्यन्त"मित्यादि। अतो यतिमेव प्रकृत्य यानि कर्माणि विहितानि तानि कर्तव्यानि यानि च निषिद्धानि तानि वर्जनीयानीति। बुद्धे क्षेमप्रापणमित्येतत्पक्षविरुद्धमाह ॥

१६. आत्मबोधमात्रेण चेत् क्षेमं प्राप्येत तदेहैव शरीरे दुःखं नोपलभेत ज्ञानी न चैतदस्ति न हि ज्ञानिना मूर्धाभिषिक्तंमन्यमानोपि क्षुधा दुःखमेव तावत्क्षणमात्रमपि सोढुं प्रभवति। कथं तर्हि तत्त्वज्ञानमात्रेण दुःखं नानुभूयत इत्यस्ति शास्त्रम्। "अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" "तरति शोकमात्मवि"दितिश्रुतिरिहैव विशोकत्वं ज्ञातं तद् विरुध्यते। तत्राह[1] ॥

१७. [2]तत्त्वज्ञाने ज्ञातेपि दुःखक्षयाभावाद् दुःखक्षयो येन साधनेन भवति तदन्यत् परं ज्ञानोत्पत्तेरनुष्ठेयमस्तीति व्याख्यातम्। परलोकभवं दुःखमेतेनैव व्याख्यातम्। न स्वैरचारिणां निवर्तन इति तस्मान् स्वकर्मभिरपरिपक्वकषायः श्रवणमनननिदिध्यासनैः साक्षात्कृतात्मस्वरूपः प्रतिषिद्धेषु कटाक्षमप्यनिक्षिपन्नष्टाङ्गयोगनिरतो

[1] G. U. omits all from कथं तर्हि to तत्राह — [2] G.U. omits all from तत्त्वज्ञाने to व्याख्यातम्।

मुच्यत इति। अत्र बोधायन॰ [२, १८, १] "एकदण्डी त्रिदण्डी वे"ति। गोतमोपि [३, २२] मुण्ड॰ शिखी" वेति ॥

१९ प्रकर्षेण नास्त्यपुनःप्रवेशाय वन प्रविष्टत इति तथा च गोतमः [ ३, ३३ ] "ग्राम च न प्रविशे"दिति । गतमन्यदुत्तर च ॥

२१. क पुनरेकोग्निः । न तावदौपासनोऽब्रह्मचारित्वात् । तस्माल्लौकिकेग्नौ यथापूर्वं सायप्रात समिधमादध्यादित्येषोर्थो विवक्षितः । अपर आह । "श्रामणकेनाग्निमाधाये"ति गोतम । श्रामणक नाम वैखानस सूत्र तदुक्तेन प्रकारेणैकोग्निराधेयस्तस्मिन् साय प्रातरग्निकार्यमिति । तथा च बोधायन [२, ११, १४–१५] "वानप्रस्थो वैखानसशास्त्रसमुदाचारेणे"त्यादि । अन्यद् गतम् ।

---

## PATALA IX KANDIKĀ 22

२ मूलादिभि स्वयगृहीतै कचित् काल वर्तयित्वान्ततोन्ते प्रवृत्तानि स्वयमेव पतितान्यभिनिश्रयेदितिवक्ष्यमाणेन सबन्ध । तान्यभिनिश्रित्य तैर्वर्तयेदिति ॥

४. .. तत आकाशमित्यभिनिश्रयेन्न किंचिद् भक्षयेदिति ॥

५ सयुज्यते सश्रीयत इति सयोगः । तेषा मूलादीना मध्य उत्तरमुत्तर समाश्रियमाण फलतो विशिष्टमिति द्रष्टव्यम् ॥

६. अथेति पक्षान्तरोपन्यासे । पूर्वं ब्रह्मचर्यादेव वनप्रवेश उक्त एके त्वाचार्यास्तस्यैव वानप्रस्थस्यानुपूर्व्यं कर्मण्युपदिशन्ति ॥

९ अस्मिन् पक्षे "प्राजापत्या निरूप्येष्टिं परिव्राज" इत्युक्तेन प्रकारेण [ मनु ६ ३८ ] श्रौतासीतात्मनि समारोप्य श्रामणकेनाग्निमाधायैकाग्निर्भवेत् ॥

१० .. इद सकुटुम्बस्यैकाग्निश्च समानम् । एकाग्निन एवेत्यन्ये ॥

११. यदा शिलोञ्छवृत्तिर्जातात ऊर्ध्वं न किंचिदपि प्रतिगृह्णीयात् ॥

१४ सर्ववर्णाश्रमसाधारणमेतत् तथा चोत्तरत्र तस्य ग्रहणम् ॥

१५ पात्रमपि वास्यादिवदुपकरणविशेषो दारुमय ॥

१६ .इतराणि भार्यायै दत्त्वारण्यमवतिष्ठेताश्रयेदिति ॥

१७ प्रतीक्षातिथिपूजा । ॥

१८. येषु दर्शपूर्णमासादिषु पुरोडाशा विहिता गृहस्थस्य तेष्वस्य तत्स्थाने चरवः कार्या ॥

१९ सर्वं कर्मकाण्ड सान्नप्रधानमुपांशु भवति पारायणब्रह्मयज्ञाध्ययनेन सह । तदप्युपांशु कर्तव्यमिति ॥

